कविहृदयम् -

# जीवने अतृप्तिः

**धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु ।**
**अतृप्ताः मानवाः सर्वे याता यास्यन्ति यान्ति च ॥**

''सामान्यमानवाः जीवने प्रायः चतुर्विधाः अतृप्तीः अनुभवन्ति । ताश्च - धनविषये अतृप्तिः जीवनविषये अतृप्तिः, भोगविषये अतृप्तिः, भोजनविषये अतृप्तिः । चतुर्विधाभिः अतृप्तिभिः युक्ताः मानवाः इतः पूर्वम् आसन्, इदानीम् अपि सन्ति, इतः परम् अपि भविष्यन्ति ।''

मानवाः सर्वे अपि जीवने तृप्तिम् एव इच्छन्ति । किन्तु सदा अतृप्तिम् अनुभवन्ति । किमर्थम् एवं सम्भवति ? अत्र मूलं कारणम् आशा एव । इतोऽपि आवश्यकम्, पुनरपि आवश्यकम्, बहु आवश्यकम् इत्येवं चिन्तयतः मानवस्य आशायाः सीमा एव न भवति । अत्याशावान् मानवः मरीचिकाम् अनुधावन् मृगः इव कदापि अपेक्षितं लब्धुं समर्थः न भवति । यतः तेन यस्य अनुधावनं क्रियते तत् लब्धुं योग्यं न ।

जीवने यदि तृप्तिः इष्यते तर्हि धनादिविषयेषु लक्ष्यं किमपि निश्चेतव्यम्, इयत्ता काचित् निश्चेतव्या । मया धनादिकं प्राप्य अन्ततो गत्वा किं साधनीयम् अस्ति इति सर्वप्रथमं निर्णेतव्यम् । यदा तत् निश्चितं भवति तदा परामष्टव्यं यत् मया यत् लक्ष्यत्वेन निश्चितं तत् मम सामर्थ्यानुगुणम् अस्ति वा न वा इति । ततः पूर्वं स्वसामर्थ्यं तु सम्यक् अवगन्तव्यम् एव । यदि लक्ष्यं सामर्थ्यानुगुणं नास्ति तर्हि यावता प्रमाणेन सामर्थ्यस्य न्यूनता दृश्यते तस्य पूरणं कथमपि शक्यं वा इति चिन्तनीयम् । यदि न्यूनतांशः पूरयितुं शक्यते तर्हि लक्ष्यसिद्ध्यर्थं प्रयतनीयम् । यदि तत् न शक्यते इति भाति तर्हि लक्ष्यम् एव परिवर्तनीयम् ।

कदाचित् एवं भवति-महत्तमं लक्ष्यं निश्चितं भवति । तदनुगुणं सामर्थ्यं न भवति । तदा अन्याय्येन मार्गेण न्यूनतायाः पूरणार्थं प्रयत्नः क्रियते । एवं कृतं चेत् जीवने तृप्तिः न प्राप्यते ।

धनस्य त्यागात् तृप्तिः, न सङ्ग्रहात् । जीवनस्य साफल्यं परोपकारात्, न स्वार्थचिन्तनात् । इन्द्रियसुखं तु विकासहेतुकं, न कदापि सुखैकहेतुकम् । भोजनम् अपि शरीरपुष्टिनिमित्तकं, न कदापि जिह्वाचापल्यनिमित्तकम् । किन्तु लोकः अत्रैव प्रायः भ्रान्तः दृश्यते । इदानीं यानि प्रचारसाधनानि सन्ति, ये भोगसाधनानाम् उत्पादकाः सन्ति ते विशेषतः एतादृशीं भ्रान्तिं जनयन्ति, जातां भ्रान्तिं निरन्तरं पोषयन्ति च । कौटुम्बिकभारवहने एव क्लेशम् अनुभवन्तः मातापितरः पुत्रान् युक्तायुक्ततां बोधयितुं न शक्नुवन्ति । क्वचिच्च स्वयम् एव भ्रान्ताः सन्तः ते स्वव्यवहारेण पुत्राणां पुरतः अमार्गम् एव उपस्थापयन्ति । इदानीं राजकीयनेतारः एव नेतृत्वेन परिगण्यन्ते । ते तु स्थानापेक्षिणः, प्राप्तस्य स्थानस्य रक्षणापेक्षिणः वा । समाजोन्नतिः तेषां वचनेषु प्राथम्यं प्राप्नोति, न व्यवहारे । अतः अन्धैः नीयमानाः अन्धाः इव वयं सर्वे अतृप्तिमार्गम् अनुसरन्तः तृप्तिम् अन्विष्यामः । तृप्तिमार्गः अन्यः एव अस्ति इति यदा ज्ञायते तदा जीवितम् एव समाप्तप्रायं भविष्यति । अतः तृप्तिः मरीचिकायते ।

# शीघ्रं कार्यं समापयतु भवती

| | | |
|---|---|---|
| स्वामिनी - | कि दुर्गे, अद्य एतावान् विलम्बः ? | What is this Durga ? Why are you so late today ? |
| कर्मकरी - | पुत्री स्वपुत्रैः सह आगतवती अस्ति अम्ब ! अतः गृहे कार्याणि अधिकानि आसन् । | My daughter and her children have arrived. So, there was more work at home. |
| स्वा - | आस्तां तावत् । शीघ्रं कार्याणि समापयतु । मया नववादने अन्यत्र गन्तव्यम् अस्ति । | That is right, but finish the work fast. I have to go somewhere at 9 O' clock. |
| क - | भवती चिन्तां मा करोतु । अर्धघण्टाभ्यन्तरे कार्याणि समापयिष्यामि । | Don't worry, madam. I will finish it in half an hour. |
| स्वा - | भवती न आगच्छेत् इति मत्वा मया एव सम्मार्जनकार्यम् आरब्धम् आसीत् । | I thought you might not come and was about to start sweeping myself. |
| क - | हा हन्त ! बहु कष्टम् अनुभूतं भवत्या । यदि मम अनागमनं स्यात् तर्हि पुत्रद्वारा वा अहं वार्तां प्रेषयेयम् एव । | I am sorry, I troubled you, madam. But if I was unable to come, I would have sent word through my son. |
| स्वा - | कः जानाति - कस्य व्यवहारः कदा कीदृशः भवति इति । भवती न आगता इति गृहकार्याणि परित्यक्तुं न शक्यन्ते खलु ? तानि तु अवश्यं करणीयानि एव । | Who knows about other's work commitments ? When you do not come, we have to do the work ourselves. We can not allow it to remain unattended ! |
| क - | यद्दिने अहम् आगन्तुं न शक्ता तस्मिन् दिने कार्यार्थं मम माता प्रतिवेशिनी वा प्रेषिता एव मया । भवत्याः गृहस्य कार्यं कदापि न परित्यक्तम् । | Madam, you know I have sent my mother or my neighbour when on occasions I have not been able to come ! I have never allowed you to suffer ! |
| स्वा - | अलं वार्तालापेन । शीघ्रं कार्यं समापयतु भवती । | O.K. Let us talk later. Now finish the work fast. |

# BACK TO SCHOOL WITH CHELPARK

**CHELPARK RANGE OF PRODUCTS**

WAX CRAYONS. WATER COLOUR CAKES. PEN. PENCIL. INK. OIL PASTELS.
MOPPLES COLOUR SET. WATER COLOUR SET.




CHELPARK COMPANY PVT. LTD.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्गुष्ठाङ्कनम् - | Thumb impression | प्रतिनिवृत्तः - | Came back |
| अद्यावधि - | Till today | प्रत्यपादयत् - | Explained |
| अप्रतिभः - | Modest | भल्लूकः - | Bear |
| अर्चकः - | Priest | भेत्तुम् - | To break |
| अवधारितः - | Taken into consideration | मधूकः - | A kind of tree |
| आयोजकः - | Organiser | मध्यवर्ती - | Middleman |
| आसनस्थः - | One who is seated | महिषः - | Bison |
| उलूकः - | Owl | मातुलः - | Mother's brother |
| करण्डकः - | A small box | मातुलेयः - | Maternal uncle's son |
| कर्मकरः - | Worker | यच्छन् - | Having given |
| काचकम् - | Glass | लवणम् - | Salt |
| खञ्जन् - | Limping | वक्त्रम् - | Face |
| गुरुतरः - | Bigger or larger | वातायनम् - | Window |
| द्योतयति - | Shows | विद्धवान् - | Hit |
| नखः - | Nail | विद्युज्जनकम् - | Generator |
| नाणकम् - | Coin | विशालीकरणम् - | Extending |
| निरोद्धुम् - | To protect | शपथः - | Vow |
| परेद्युः - | The next day | शोभते - | Shines |
| पामरः - | Layman | श्रोता - | Listener |
| पीतवर्णः - | Yellow colour | सध्यानम् - | With attention |





# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'


## कृष्णफलकात् अतिरिक्तं किञ्चित् .....

**प्रा**चीनकथाभ्यः ज्ञायते यत् प्राचीने काले राजपुत्र-सामान्यजनभेदं विना सर्वे अरण्यस्य रमणीये परिसरे गुरुकुले कथम् अध्ययनं कुर्वन्ति स्म इति । तत्र निश्चितः कोऽपि पाठ्यक्रमः, पाठ्यपुस्तकपठनक्लेशः, दीर्घाणाम् उपन्यासानां श्रवणं, टिप्पणीलेखनं वा न भवति स्म । बालाः सदापि गुरुणा सहैव तिष्ठन्ति स्म । ते आश्रमं परितः स्थिताः तरुलताः वन्यजीविनः च पश्यन्तः गुरुणा यत् उच्यते तत् श्रद्धया शृण्वन्ति स्म । बालैः दृष्टं, श्रुतम्, आघ्रातम्, अनुभूतं च विषयम् अधिकृत्य गुरुः किं, कथं, किमर्थं, कदा इत्यादीन् अंशान् बोधयति स्म । बालाः कियत्कालं गुरुकुले तिष्ठेयुः, कदा वा गृहं प्रासादं वा प्रतिगच्छेयुः इति विषयं गुरुः एव निर्णयति स्म । किन्तु एतत् सर्वम् आसीत् 'प्राचीने काले' ।

तेषां गुरुकुलानां विषये जनाः बहुधा प्रशंसां कुर्वन्तः दृश्यन्ते । आधुनिके एतस्मिन् काले सा च पद्धतिः कुत्रापि न दृश्यते । अथवा क्वचित् दृश्येत - प्रगतिम् असाधितवत्सु केषुचित् ग्रामेषु । तत्र भवनाभावात् न प्रकोष्ठाः । प्रकोष्ठाभावात् वृक्षतले एव कक्ष्या !! किन्तु यः अध्यापयति सः तत्र न वसति । छात्राः इव सः अपि सुदूरात् कस्माच्चित् प्रदेशात् आगच्छति ।

एतादृशाः दुरवस्थाम् आपन्नाः विद्यालयाः अन्यविद्यालयसमाः भवेयुः इति उद्देशेन सर्वकारेण स्वीकृता विशिष्टा योजना - 'कृष्णफलककार्यक्रमः' (Operation Black Board) नाम । प्रकोष्ठद्वयेन प्रकोष्ठत्रयेण वा युक्तस्य विद्यालयस्य निर्माणम्, उपाध्यायद्वयस्य उपाध्यायत्रयस्य वा नियोजनं, यत्र च एका अध्यापिका अपरिहार्यतया स्यात्, प्रतिवर्षं कृष्णफलकव्यवस्था, विद्यालये पानजलस्य, शौचालयस्य, लघुग्रन्थालयस्य च व्यवस्था - इत्येते तस्याः योजनायाः अङ्गानि । एतदर्थम् एतावता एव सर्वकारेण प्रभूतं धनं व्ययितम् अस्ति । एतदर्थं निश्चिते धने अव्ययितः भागः अपि महान् अस्ति । असमीचीना कार्ययोजना अत्र कारणम् । एतस्य कारणतः ते विद्यालयाः प्रायः यथापूर्वम् एव स्थिताः, ये च वृक्षाणाम् अधः प्रचलन्ति स्म ।

'भित्तिचतुष्टयात् बहिर्भूतः कृष्णफलकात् अतिरिक्तः गुरुकुलक्रमः ग्रामीणेषु प्रदेशेषु आनेतव्यः' इत्यपि चिन्तयन्तः सन्ति शिक्षणतज्ज्ञाः । किन्तु अत्र सन्देहः नाम-यन्त्रागारविस्तारतः नगरनिर्माणतः च अपीडिताः ग्रामाः एतदर्थं प्राप्येरन् वा इति ।


सम्पुटः - १२ जून - १९९५ सञ्चिका - ३

प्रतिकृतिमूल्यं रू. ५.०० * वार्षिकं ग्राहकशुल्कं रू. ६०.००

# REWARD!



BRING 10 DIFFERENT WRAPPER STORIES AND THEIR WRAPPERS TO GET 3 MONOPACKS FREE

**Big Babŏl**

SOFT NON STICKY BUBBLE GUM

**HURRY KIDS!**

- Look out for wrapper stories inside Big Babŏl monopacks only
- Collect the reward from your nearest dealer
- Offer available in select cities

PERFETTI

**वार्ताविशेषः -**

# दारिद्र्यनिर्मूलनार्थं प्रयत्नः

डेनिष्राजधान्यां कोपेन्हागन्नगरे मार्चमासस्य षष्ठ(६) दिनाङ्कतः द्वादश(१२) दिनाङ्कान्तं यावत् 'समूहाभिवृद्धि' सम्बद्धं विश्वसम्मेलनं प्रवृत्तम् । एतस्मिन् सम्मेलने भागग्रहणार्थम् आयोजकैः १८५ देशाः सम्प्रार्थिताः आसन् । सप्ताहं यावत् प्रवृत्तस्य एतस्य सम्मेलनस्य कस्मिंश्चित् दिने १२१ देशीयाः नायकाः उपस्थाय दिनं यावत् स्थितवन्तः आसन् । १८० देशानां ६,००० प्रतिनिधयः सम्मेलनेऽस्मिन् भागम् ऊढवन्तः । एतदतिरिच्य शताधिकानां शासनेतरसंस्थानां १२,००० प्रतिनिधयः अपि अत्र उपस्थिताः आसन् । एतस्य सर्वस्य दर्शनात् एव एतस्य सम्मेलनस्य प्रामुख्यं ज्ञातं भवति ।

एतस्मिन् सम्मेलने प्रमुखतया समूहाभिवृद्धिसम्बद्धाः विषयाः, तन्नाम, प्रजानां क्षेमाभ्युदयोपायाः चर्चिताः । इदानीं प्रपञ्चे अधिकसङ्ख्याकाः जनाः दारिद्र्यात् बाध्यमानाः सन्ति । तेषु बहवः लेखितुं पठितुं वा अजानन्तः निरक्षराः । केषुचित् देशेषु निरुद्योगसमस्या अतिघोरा जाता अस्ति । केचन सर्वकारतः प्राप्यमाणं साहाय्यं चातकपक्षिणः इव प्रतीक्षमाणाः भवन्ति चेत्, पुनः केचन किमपि साहाय्यम् अप्राप्नुवन्तः निर्गतिकजीवनं यापयन्तः सन्ति । सम्मेलने भागं गृहीतवद्भिः नायकैः एषः अंशः सम्यक् मनसि अवधारितः अस्ति । भारतस्य प्रधानमन्त्री श्री. नरसिंहरावर्यः एतां समस्याम् अधिकृत्य वदन् - ''दारिद्र्यपीडा प्रपञ्चस्य कस्मिंश्चित् कोणे अस्ति चेदपि शान्तिसुरक्षार्थं शान् अवश्यं बाधते एव । यदि सामूहिकाभिवृद्धिः साधनीया, यदि च मानवाभ्युदयः सम्प्राप्तव्यः, तर्हि सर्वप्रथमं दारिद्र्यपिशाचम् उच्चाटयितुं प्रजानां शक्तिः यथा स्यात् तथा करणीयम्'' इति उक्तवान् ।

विश्वशान्तेः आघातकरीम् एतां भीकरसमस्याम् अधिकृत्य प्रस्तावस्य उपस्थापनं, चर्चाकरणं वा ऐदम्प्राथम्येन न । किन्तु इतः पूर्वं प्रवृत्तेषु समावेशेषु शासनैः (सर्वकारैः) यद्यत् करणीयं तद्विषये चर्चा प्रचलति स्म । किन्तु कोपेनहागन्समावेशः प्रत्यपादयत् यत् दारिद्र्यं, निरक्षरता, निरुद्योगः इत्यादीनां समस्यानां निवारणार्थं प्रजाभिः एव प्रधानपात्रं निर्वोढव्यं, प्रजाः एव एतस्मिन् यज्ञे केन्द्रस्थाने तिष्ठेयुः इति ।

एतस्मिन् समावेशे शासनेतरसंस्थाभिः या आसक्तिः प्रदर्शिता तया प्रपञ्चनायकाः विश्वासं प्राप्तवन्तः सन्ति यत् इष्टम् अवश्यं सेत्स्यति इति । अतः ते 'प्राथमिकस्तरात् एव एतासां समस्यानां निवारणार्थं प्रयत्नः प्रचलेत्' इति सानुरोधं प्रतिपादितवन्तः ।

''मानवजातेः विनाशस्य हेतुभूतानां मारकास्त्राणां निर्माणे परिपोषणे च एतत् विंशतितमं शतकं यापितम् अभवत् । शतकस्यास्य अन्तिमे भागे वा जनहितकार्याणां विषये जनानां चिन्तनं प्रवर्तते इति तु शुभसूचकः अंशः । परस्परसहकारम् आधारीकृत्य एव तिष्ठति एतस्मिन् प्रपञ्चे दारिद्र्य-निरक्षरतादीनां समस्यानाम् उन्मूलनार्थं स्थितः तारकोपायः नाम अन्ताराष्ट्रियसहकारः एव'' इति उक्तम् अस्ति अस्माकं प्रधानमन्त्रिणा श्रीमता पि. वि. नरसिंहरावमहाभागेन ।



# देवः प्रत्यक्षः जातः

धर्मपुरनिवासी मोहनः महाकृपणः। सः कुसीदवाणिज्येन लक्षशः रूप्यकाणि सम्पादितवान् आसीत्।

सुधीरः मोहनस्य प्रतिवेशी। सः देवभक्तः परोपकारी च। कृपणतात्यागविषये उत्तमजीवनविषये च सः बहुवारं मोहनं बोधितवान् आसीत्। तथापि परिणामस्तु शून्यः एव आसीत्।

'पत्युः व्यवहारः खण्डनीयः भवत्या' इति मोहनस्य पत्नीं बोधितवान् सुधीरः। ''पितुः लज्जास्पदव्यवहारः किमर्थं मौनम् अङ्गीक्रियते भवद्भ्याम्?'' इति तस्य पुत्रौ अपि उक्तवान् सः। पत्नी पुत्रौ वा मोहनविरुद्धं व्यवहारं कर्तुं न इष्टवन्तः। अतः सुधीरस्य एषः प्रयत्नः अपि विफलः जातः।

ये ये ऋणस्वीकरणार्थं मोहनसमीपम् आगच्छन्ति स्म तान् बोधितवान् सुधीरः - ''मोहनः भवद्भ्यः वृद्धिरूपेण अधिकं धनं प्राप्नोति। भवताम् असहायकतायाः दुर्लाभं प्राप्नुवन् अस्ति सः'' इति। किन्तु एषः प्रयत्नः अपि सफलः न जातः। ऋणस्वीकर्तारः सर्वे उक्तवन्तः - ''अस्माकं दौर्भाग्यकारणतः वयम् ऋणगर्ते पतिताः स्मः। किं मोहनस्य निन्दनेन?'' इति।

मोहनस्य अव्यवहारं द्रष्टुं न शक्नोति स्म सुधीरः। किन्तु मोहनस्य अन्याय्यव्यवहारं निरोद्धुं मार्गम् अपि सः न जानाति स्म। अन्ते बहु विचिन्त्य सः निर्णीतवान् यत् मोहनस्य मारणम् एव उचितम् इति।

सुधीरः चिन्तितवान् आसीत् - 'मोहनः मद्विषये किमपि अन्याय्यं न आचरितवान्। अतः तस्य मारणतः मम वैयक्तिकलाभः तु कोऽपि नास्ति। लाभः तु अन्येषाम् एव। अतः मोहनस्य मारणात् परोपकारः एव सेत्स्यति। भगवान् विविधान् अवतारान् प्राप्य भूलोकम् आगत्य दुष्टान् संहृतवान्।

''सुभद्रा''

एतस्मात् एतत् तु स्पष्टं यत् पापिनः मारणं न अधर्मः इति। यदि अहं मोहनं मारयेयं तर्हि तत् धर्मकार्यम् एव स्यात्, न कदापि अधर्मकार्यम्' इति।

सुधीरस्य काचित् प्रवृत्तिः आसीत् यत् सः कार्यारम्भात् पूर्वं राममन्दिरं गत्वा भगवन्तं प्रणम्य आशीर्वादं प्रार्थयति स्म, तदनन्तरम् एव कार्ये प्रवर्तते स्म।

एतस्याः प्रवृत्तेः अनुगुणं सुधीरः राममन्दिरं गतवान्। नेत्रे निमील्य ध्यानं कृत्वा यदा सुधीरः नेत्रे उन्मीलितवान् तदा तस्य पुरतः षोडशवर्षीयः कश्चन तरुणः उपस्थितः आसीत्। सः आश्चर्यचकितं सुधीरम् उक्तवान् - ''अहं भगवान् अस्मि। भवता सह भवदीयं गृहम् आगन्तुम् इच्छामि'' इति।

''वस्तुतः अपि भवान् भगवान् एव! कथम् अहम् अत्र विश्वासं कुर्याम्?'' इति आश्चर्येण पृष्टवान् सुधीरः।

''यत् कार्यं भवता कर्तुं न शक्यते तत् कर्तुम् उद्युक्तः भवान्। अतः भवतः साहाय्यार्थं देवलोकात् अहम् अत्र आगतः। मोहनस्य मारणं भवतः सामर्थ्यातीतम् अस्ति। पापिनां विशिष्टं बलं भवति। अतः ते उपायेन जेतव्याः, न तु शक्त्या'' इति उक्तवान् देवः।

मोहनस्य मारणस्य विषयम् अन्यः कोऽपि न जानाति स्म एव। 'मनसि गूढतया स्थापितः तादृशः भावः एव एतेन ज्ञातः अस्ति इत्यतः एषः साक्षात् देवः एव' इति



विश्वासः उत्पन्नः सुधीरस्य मनसि। अतः सः तं युवकं साष्टाङ्गं नमस्कृतवान्।

देवः तम् उत्थाप्य उक्तवान् - ''मोहनात् ऋते अन्यः कोऽपि भवता न वक्तव्यः यत् अहं साक्षात् भगवान् इति। अग्रे यत् प्रवर्तिष्यते तत् मौनं परिशीलयतु भवान्'' इति।

ततः सुधीरः देवेन सह गृहं गतवान्। तस्मिन् दिने गृहे विशेषपाकः सज्जीकृतः। उभौ अपि आतृप्ति भोजनं कृतवन्तौ। भोजनानन्तरं कानिचन रुचिकराणि भक्ष्याणि स्वीकृत्य सुधीरः मोहनस्य गृहं गतवान्। तानि खादित्वा मोहनः पृष्टवान् - ''सर्वाणि रुचिकराणि सन्ति। किन्निमित्तम् एतानि सज्जीकृतानि?'' इति।

''साक्षात् भगवान् एव मम गृहम् आगतः



अस्ति इत्यतः एतानि सर्वाणि सत्यीकृतानि। तदीयाम् आगमनवार्ताम् ऋते भवतः अन्यः कोऽपि न वक्तव्यः इति भगवतः आज्ञा अस्ति। अतः भवान् अपि अन्यं कमपि एतां वार्तां मा वदतु'' इति उक्तवान् सुधीरः।

तदा मोहनः कुतूहलेन उक्तवान् - ''भगवान् कथं भवति इति मया अपि द्रष्टव्यं खलु ? कृपया तं मम गृहम् आनयतु'' इति।

सुधीरः गृहं प्रतिगत्य देवेन सह मोहनस्य गृहं पुनः आगतवान्। तरुणाकारकं भगवन्तं नखशिखान्तं दृष्ट्वा मोहनः पृष्टवान् - ''भवान् भगवान् वा ? वासार्थं सुधीरस्य गृहात् ऋते अन्यत् किमपि स्थलं न प्राप्तं वा ?'' इति।

''सुधीरः मम भक्तः। अतः अहं तस्य गृहे वासं कुर्वन् अस्मि'' इति उक्तवान् देवः।

''भवान् एव भगवान् इत्यत्र कथं विश्वासः कर्तुं शक्येत ?'' इति पुनः पृष्टवान् मोहनः।

''सत्यम् अचिरात् एव ज्ञास्यते भवता। ऋणपत्रम् अस्वीकृत्य एव दश दिनानि यावत् सुधीराय प्रतिदिनं सहस्रं रूप्यकाणि ददातु भवान्। भवता दत्तानि दशसहस्रं रूप्यकाणि शतगुणितं वर्धितानि भविष्यन्ति। समग्रं धनं सुधीरः भवते एव दास्यति। तत्र दशसहस्रं रूप्यकाणि भवता सुधीराय दातव्यानि, तावदेव'' इति उक्तवान् देवः।

''भवन्तौ मिलित्वा कपटनाटकम् अभिनयतः। यदि अहम् ऋणपत्रं विना सुधीराय धनं दद्या तर्हि अनन्तरकाले सुधीरः 'भवता धनं न दत्तम् एव' इति यदि वदेत् तर्हि मया किं वा करणीयम् ?'' इति पृष्टवान् मोहनः।

''साक्षात् भगवान् अहम् एव अत्र साक्षी अस्मि। एवं स्थिते ऋणपत्रस्य का आवश्यकता ?'' इति पृष्टवान् देवः।

तदा मोहनः गाम्भीर्येण उक्तवान् - ''भवान् भगवान् एव इत्यत्र सर्वथा नास्ति मम विश्वासः'' इति।

तावता नागभूषणः नाम तद्ग्रामीणः तत्र आगतवान्। तस्य सुविशाला भूमिः आसीत्। विशालं गृहम् अपि आसीत्। सः परोपकारी, धर्मात्मा, दानशीलः च आसीत्। अतः तस्य हस्ते धनं न तिष्ठति स्म।

नागभूषणस्य सेवकस्य दामोदरस्य पुत्र्याः विवाहः निश्चितः आसीत् । दामोदरः विवाहव्ययार्थं नागभूषणं शतं रूप्यकाणि प्रार्थितवान् आसीत् । तावत् धनं नागभूषणस्य हस्ते न आसीत् इत्यतः ऋणं स्वीकर्तुम् आगतवान् आसीत् नागभूषणः ।

भगवान् नागभूषणम् उक्तवान् - ''दर्शनात् भासते यत् भवान् धर्मात्मा इति । भवान् ऋणपत्रं विनैव सुधीराय दश दिनानि यावत् प्रतिदिनं सहस्रं रूप्यकाणि ददातु । दशदिनानाम् अनन्तरं तत् धनं शतगुणितं भविष्यति । समग्रं धनं सुधीरः भवते प्रत्यर्पयिष्यति । तत्र दशसहस्रं रूप्यकाणि भवता सुधीराय दातव्यानि, तावदेव'' इति ।

''अस्तु तावत् । किन्तु प्रतिदिनं सहस्रं रूप्यकाणि दातव्यानि खलु ? मम समीपे तावत् धनं नास्ति'' इति स्वविवशतां प्रदर्शितवान् नागभूषणः ।

''मोहनः भवते ऋणं दास्यति'' इति उक्तवान् देवः ।

''विना पत्रम् ऋणदानस्य प्रसक्तिः सर्वथा नास्ति । यदि नागभूषणः स्वभूमिं क्षेत्रं च आधिरूपेण दद्यात् तर्हि दशसहस्रं रूप्यकाणि इदानीम् एव दद्याम्'' इति उक्तवान् मोहनः ।

''एवं तर्हि मोहनस्य अपेक्षानुसारं भूमिं भवनं च आधिरूपेण निक्षिप्य ऋणं प्राप्नोतु'' इति नागभूषणं सूचितवान् देवः ।

ततः ऋणपत्रं लिखित्वा दत्त्वा धनं प्राप्तवान् नागभूषणः । सहस्रं रूप्यकाणि तस्मिन् एव समये सुधीराय दत्तवान् सः ।





तदा देवः तम् उक्तवान् - ''एतं विषयं परिचितान् ग्रामीणान् सर्वान् वदतु । यः सुधीराय यावत् धनं ददाति ततः शतगुणितं लाभं प्राप्नोति । एतावदेव धनं दातव्यम् इति न नियमः । एकं रूप्यकं दत्तं चेदपि लाभः प्राप्यते एव'' इति ।

एतत् अङ्गीकृत्य ततः निर्गतवान् नागभूषणः ।

''भवन्तः मां वञ्चयितुं कामपि योजनां कृतवन्तः सन्ति इति भाति मम । यदि भवान् वास्तविकः भगवान् एव स्यात् तर्हि स्ववैशिष्ट्यं किमपि प्रदर्शयतु'' इति उक्तवान् मोहनः ।

''यदि शक्तिः अस्ति तर्हि पश्यतु । दश अवतारान् अहं प्रदर्शयामि'' इति उक्त्वा देवः दश अवतारान् प्रदर्शितवान् । मोहनः तं पश्यन् एव स्थितवान् । किन्तु तेन देवे किमपि परिवर्तनं वैशिष्ट्यं वा न दृष्टम् ।

''अहो, सर्वं वञ्चनामयम् ! भवन्तः मां मूर्खं कर्तुम् इच्छन्ति, तावदेव । सर्वे निर्गच्छन्तु इतः'' इति क्रोधेन उक्तवान् मोहनः । सुधीरः देवः च ततः निर्गतवन्तौ ।

तस्मिन् दिने सायङ्काले मोहनस्य गृहस्य पुरतः महान् जनसम्मर्दः दृष्टः । जनाः अमूल्यानि वस्तूनि, सम्पत्तिं च आधिरूपेण निक्षिप्य मोहनतः धनं प्राप्य तत् आनीय सुधीराय दत्तवन्तः । सुधीरस्य गृहे धनस्य राशिः एव सञ्जातः ।

एतत् सर्वं दृष्ट्वा सुधीरः अधीरतां प्राप्य भगवन्तम् उक्तवान् - ''किं प्रवर्तमानम् अस्ति इत्येव न अवगम्यते मया । अहं दिङ्मूढः जातः अस्मि । एकस्य कृपणस्य निग्रहार्थम् एतावान् परिश्रमः किमर्थम् ? भवतः लीला कीदृशी इति न अवगम्यते मया । मम तु भाति - मोहनं बोधयितुं भवता कृतः उपायः सफलः न जातः इति'' इति ।

तदा मन्दहासं प्रकटयन् उक्तवान् देवः - ''मया मोहनः न पीड्यते, न वा वञ्च्यते । धनस्य शतगुणितवृद्धिं प्राप्तुं शक्यते इति मम वचनम् अपि सत्यम् एव । इतोऽपि दशदिनानाम् अवधिः अस्ति खलु ? तदभ्यन्तरे किं किं भविष्यति इति पश्याम तावत्'' इति ।

ततः दश दिनानि अतीतानि । देवः सुधीरम् उक्तवान् - ''इतः किञ्चित्-

कालाभ्यन्तरे सर्वेषां धनं शतगुणितं भविष्यति । पूर्वतनवचनानुसारं भवान् सर्वेभ्यः अपि धनं प्रत्यर्पयतु । ततः तैः यावत् दीयते तेन भवन्तः सर्वे सुखेन स्थातुम् अर्हन्ति । मम कार्यम् इतोऽपि किञ्चित् अवशिष्टम् अस्ति । तत् समाप्य आगच्छामि तावत्'' इति उक्त्वा देवः मोहनस्य गृहं गतवान् ।

मोहनः भगवतः मुखं दृष्ट्वा हसन् उक्तवान् – ''भगवन् ! अवधिः समाप्तः अस्ति । शीघ्रं निर्गच्छतु इतः । अन्यथा वञ्चिताः सर्वे पाषाणवर्षणेन भवन्तं निपीडयिष्यन्ति । तत् वर्षणं रोद्धुं समीपे कुत्रापि गोवर्धनपर्वतः अपि नास्ति'' इति ।

''किं तेन ? अहं सर्वशक्तः अस्मि । नूतनानां पर्वतानां सृष्टिं कर्तुम् अपि समर्थः अस्मि । इदानीं पश्यतु मम कृष्णावतारम्'' इति वदन् देवः गोवर्धनगिरिधारिरूपेण मोहनस्य पुरतः स्थितवान् । एतत् दृष्ट्वा महत् आश्चर्यम् अनुभवन् मोहनः – ''भवान् वस्तुतः अपि भगवान् एव !'' इति यावत् उक्तवान् तावता भगवान् मन्दहासं प्रकटयन् ततः अदृश्यः जातः ।

भगवान् स्वयम् आगतः आसीत् इत्यत्र सन्देहः एव न अवशिष्टः मोहनस्य । यावत् सः एतम् आश्चर्याघातं सोढुं प्रयतमानः आसीत् तावता ऋणप्रत्यर्पणार्थं जनाः एकैकशः आगन्तुम् उद्युक्ताः अभवन् । सुधीराय यावत् धनं दत्तम् आसीत् तस्य शतगुणितं धनं प्राप्तम् आसीत् तैः । अतः सर्वे ऋणात् मुक्तिं प्राप्य मोहनस्य गृहम् आगतवन्तः ।

आत्मनः अविवेकितां स्मरन् मोहनः अश्रूणि स्रावयन् एव सर्वतः अपि वृद्धिं मूलधनं च प्राप्तवान् । 'आगतः भगवान् एव इति पूर्वम् एव यदि अवगन्तुं शक्नुयां तर्हि समीचीनम् अभविष्यत्' इति चिन्तयतः तस्य हृदयं पश्चात्तापेन दग्धम् अभवत् ।

पश्चात्तापाग्निना दह्यमानः सः 'इतःपरम् एतस्मिन् ग्रामे वासः न उचितः' इति निर्णीय अन्यस्मिन् सुदूरस्थे ग्रामे वासम् आरब्धवान् । तत्र निर्धनानां साहाय्यं कुर्वन् शिष्टं जीवनं तृप्त्या यापितवान् च ।



# वञ्चकः कः ?

राजधान्यां प्रचलतः राजकुमारस्य जन्मदिनोत्सवाचरणस्य दर्शनार्थं भालचन्द्रः भद्राचलः च स्वग्रामात् प्रस्थितवन्तौ । तौ उभौ अपि सरलौ कपटताज्ञानरहितौ च । अतः ज्येष्ठाः तान् उक्तवन्तः आसन् यत् नगरे वञ्चकाः अधिकाः, तदर्थं जागरूकतया भवितव्यम् इति ।

राजधानीं प्राप्तवन्तौ तौ जन्मदिनोत्सवाचरणस्य वैभवं दृष्ट्वा नितरां सन्तुष्टौ जातौ । मार्गे गच्छन्तौ तौ राज्ञीवासभूतम् उन्नतं भवनम् एकं दृष्टवन्तौ । तस्मिन् भवने काचककवाटयुतानि सुन्दराणि बहूनि वातायनानि आसन् ।

एतत् दृष्ट्वा नितरां सन्तुष्टः भालचन्द्रः - 'एकं..., द्वे..., त्रीणि...' इति वातायनानि गणयितुम् उद्युक्तः अभवत् । तावता तत्र आगतः कश्चन दीर्घश्मश्रुयुक्तः भीमकायः भालचन्द्रसमीपम् आगत्य दर्पेण पृष्टवान् - ''रे, कति वातायनानि गणितानि भवता ?'' इति ।

''षोडश वातायनानि, तावदेव'' इति भीत्या उक्तवान् भालचन्द्रः ।

''एवं तर्हि षोडश रूप्यकाणि मह्यं ददातु । अनुमतिं विना वातायनानां गणना नियमविरुद्धा इति न जानाति वा भवान् ? ददातु षोडश रूप्यकाणि'' इति कठोरस्वरेण उक्तवान् सः श्मश्रुलः ।

भीतः भालचन्द्रः तस्मै षोडश रूप्यकाणि दत्तवान् । सः भीमकायः तानि रूप्यकाणि स्वीकृत्य ततः वेगेन निर्गतवान् ।

तदा भद्राचलः उक्तवान् - ''पश्यतु, दुष्टः सः भवन्तं वञ्चितवान्'' इति ।

एतत् श्रुत्वा साभिमानम् उक्तवान् भालचन्द्रः - ''वञ्चितः न अहम्, अपि तु सः एव । मया वस्तुतः विंशत्यधिकानि वातायनानि गणितानि आसन् । किन्तु मया उक्तं यत् षोडश एव गणितानि इति । षोडश रूप्यकाणि एव दत्तानि च । अतः सः एव वञ्चितः अभवत्'' इति ।






## ७

(ट्राय्नगरस्य उपरि ग्रीक्जनैः आक्रमणं कृतम् । ततः नव वर्षाणि अतीतानि । एतदभ्यन्तरे ग्रीक्शिबिरे अन्तःकलहः उत्पन्नः । ग्रीक्वीरेषु अग्रगण्यः वज्रकायः युद्धरङ्गात् प्रतिगतवान् । एतत् दृष्ट्वा सन्तुष्टाः ट्राय्वीराः सन्तोषं प्राप्तवन्तः, ग्रीक्जनान् प्रहृतवन्तः च । तैः ग्रीक्नौका काचित् दग्धा अपि । एतत् सर्वं दृष्ट्वा मौनं स्थातुम् अशक्तः वज्रकायः युद्धरङ्गम् आगतवान् । ट्राय्सैन्ये महावीरत्वेन ख्यातं वीरसिंहं मारितवान् च । भुवनसुन्दरीम् उन्नीय गतवान् मोहनः सूर्यालये वज्रकायम् उरसि प्रहृत्य मारितवान् । तदनन्तरम् ...)

वज्रकायस्य मरणस्य अनन्तरं प्राचीनपरम्परानुगुणं स्पर्धाः प्रवृत्ताः । धावनस्पर्धायां देवमयः, चक्रक्षेपणे भूधवः च जयं प्राप्तवन्तौ । वज्रकायस्य माता तटिनी उक्तवती यत् यः ग्रीक्सैनिकेषु अप्रतिमः भवति तस्मै एव वज्रकायस्य शस्त्रास्त्राणि दीयन्ते इति । वज्रकायस्य शवं महता साहसेन आनीतवान् रूपधरः भूधवः चापि महत् शौर्यं प्रकटय्य अस्त्रस्वीकारविषये स्वस्य अर्हतां प्रकटितवन्तौ । तादृशं धैर्यम् अन्येन केनापि न प्रकटितम् । अनयोः कतरः श्रेष्ठः इति निर्णेतुम् अशक्नुवन् राजा वयसा ज्ञानेन च वृद्धं नवद्योतं प्रार्थितवान् यत् एतद्विषये भवता साहाय्यं करणीयम् इति ।

तदा नवद्योतः सूचितवान् - "अस्मदीयानां पराक्रमः शत्रुभिः सम्यक् ज्ञायते । बहुषु युद्धेषु ते अस्मदीयान् वीरान् दृष्टवन्तः भवन्ति । वीरतमः कः इति ते अपि

निर्णयं कृतवन्तः भवन्ति। गुणैकपक्षपातिनः ते वीरस्य शौर्यमात्रं पश्यन्तः श्रेष्ठत्वं निर्णयन्ति। अतः शत्रुभिः यस्य प्रशंसा क्रियते सः एव श्रेष्ठः वीरः। अतः श्रेष्ठवीरः कः इति ज्ञातव्यं चेत् भवान् शत्रूणां मुखतः विषयं सङ्गृह्णातु'' इति।

एतम् उपायं युक्तं मन्यमानः राजा - ''शत्रवः भूधवरूपधरयोः विषये किं वदन्ति इति ज्ञात्वा आगच्छन्तु'' इति संसूच्य गुप्तचरान् ट्रायनगरं प्रति प्रेषितवान्। ग्रीकगुप्तचराः रात्रौ ट्रायनगरं प्रविष्टवन्तः।

तत्र कुत्रचित् वार्तालापमग्नाः काश्चन तरुण्यः तैः दृष्टाः। तासां वार्तालापः सध्यानं श्रुतः गुप्तचरैः।

वज्रकायस्य शरीरं नीलं यत् तद्विषये एव वार्तालापं कुर्वत्यः आसन् ताः। 'प्रायः एषः वार्तालापः श्रुतः चेत् विषयनिर्णये सौलभ्यं भवेत्। वयं यत् ज्ञातुम् इष्टवन्तः तद्विषये एव अत्र वार्तालापः प्रचलति इति तु अस्माकं सौभाग्यम्' इति चिन्तितवन्तः गुप्तचराः।

तासु काचित् उक्तवती - ''अस्माकं वीराः अस्त्राणां वर्षणं कुर्वन्तः सन्ति चेदपि वज्रकायस्य शवं स्कन्धे आरोप्य सूर्यालयतः नीतवतः भूधवस्य पराक्रमः एव वस्तुतः श्रेष्ठः'' इति।

तदा अपरा उक्तवती - ''शवं स्वीकृत्य रहसि पलायनं किं विशिष्टं कार्यम्? तादृशं कार्यं सामान्यः अपि कुर्यात्। किन्तु शत्रुभूतान् अस्मत्सैनिकान् धैर्येण सम्मुखीकृत्य भूधवम् आत्मानं च रक्षितवान् रूपधरः एव श्रेष्ठः पराक्रमी'' इति।

तत्र सम्मिलिताः अन्याः स्त्रियः एतत् एव



वचनं पुरस्कृतवत्यः।

गुप्तचराः एतं विषयं यथास्थितं महाराजाय निवेदितवन्तः। राजा वज्रकायस्य शस्त्रास्त्राणि रूपधराय एव समर्पितवान्।

एतत् दृष्टवतः भूधवस्य अपमाननं जातम्। 'यदि वज्रकायः इदानीम् अभविष्यत् तर्हि स्वबान्धवस्य मम एतत् अवमाननं दृष्ट्वा कोपेन महाराजं तत्पुत्रं च अमारयिष्यत्। वज्रकायः नास्तीत्यतः महाराजः भावयति यत् रूपधरः एव श्रेष्ठः इति' इत्येव चिन्तयतः भूधवस्य विवेकः नष्टः। कोपेन अन्धीभूतस्य तस्य युक्तायुक्तचिन्तनसामर्थ्यं लुप्तं जातम्।

सः कोपेन उन्मत्तः सन् गोष्ठं गतवान्। गोष्ठे ट्रायजनेभ्यः वशीकृताः अश्वधेनु-प्रभृतयः ग्रीकजनैः स्थापिताः आसन्। भूधवः गोष्ठस्थाः धेनूः चित्रहिंसया अपीडयत्। ततः तत्र उभौ श्वेतौ अश्वौ दृष्ट्वा तयोः एकं महाराजं मत्वा, अपरं च राजपुत्रं मत्वा तौ उन्नतं स्थलं नीत्वा कशया ताडितवान्।

ततः अल्पे एव काले तस्य उन्मादः उपशान्तः। तदा आत्मना कृतस्य हेयकृत्यस्य विषये लज्जाम् अनुभवन् सः समुद्रतीरं गत्वा खड्गेन स्वशरीरं प्रहृत्य आत्महत्यां कृतवान्।

'भूधवस्य शवस्य दहनं वैभवेन कर्तुं न शक्यते, शवस्य निखननं तु शक्यम्' इति उक्तवान् प्रतापः। किन्तु तावता तत्र आगतः रूपधरः वैभवेन भूधवस्य शवसंस्कारार्थं व्यवस्थां कारितवान्।

दिव्यदृष्टियुक्तः कांशुकः तत्र आगत्य





भविष्यवचनम् उक्तवान् - ''लेम्नोस्द्वीपस्य शासकस्य धनञ्जयस्य सकाशे देवानां धनुर्बाणादयः सन्ति। यावत् ते न आनीयन्ते तावत् ग्रीक्जनैः ट्रायनगरं जेतुं न शक्यते'' इति।

एतस्य कार्यस्य साधनार्थं राजा रूपधरं देवमयं च नियोजितवान्। तयोः प्रयाणार्थम् एकां नौकां दत्तवान् च । लेम्नोस्द्वीपः ग्रीक्शिबिरात् ४० मैल्दूरे आसीत् । ग्रीक्वीरयोः आगमनसमये धनञ्जयः महाव्रणैः पीड्यमानः आसीत्। उपायचतुरः रूपधरः नयवचनैः धनञ्जयसमीपस्थं धनुर्बाणादिकं स्वायत्तीकर्तुं प्रयत्नं कृतवान्। किन्तु देवमयः एतस्मिन् प्रयत्ने सहकारं न दत्तवान्।

अत्रान्तरे देवताः धनञ्जयस्य पुरतः प्रत्यक्षीभूय - ''भवता इतः ट्रायनगरं प्रति गन्तव्यम्। तत्र युद्धे भवता लाभः कीर्तिः च प्राप्यते। भवान्, वज्रकायपुत्रः नवयोधश्च ट्रायनगरस्य पतनस्य कारणं भवतः। विशिष्टयोः भवतोः अन्यतरः नास्ति चेदपि तस्य नगरस्य पतनम् असम्भवम्'' इति सूचितवत्यः।

ततः धनञ्जयः दिव्यधनुर्बाणादिभिः सह प्रस्थाय ग्रीक्जनैः मिलितः, युद्धरङ्गम् आगतवान् च। ग्रीक्शिबिरे शस्त्रचिकित्सां कर्तुं समर्थाः उत्तमाः शस्त्रवैद्याः अपि आसन्। ते धनञ्जयं स्नापयित्वा शाययित्वा शस्त्रचिकित्सां कृतवन्तः। ततः व्रणम् औषधेन लिप्त्वा नागमणिं व्रणस्य उपरि बद्धवन्तः।

एतया चिकित्सया धनञ्जयः स्वस्थः जातः। ततः सः रणरङ्गं गत्वा मोहनं धनुर्युद्धार्थम् आहूतवान्। एतस्मिन् युद्धे धनञ्जयेन प्रयुक्तः प्रथमः बाणः लक्ष्यच्युतः जातः। द्वितीयः बाणः मोहनस्य वामहस्ते लग्नः। तृतीयः बाणः मोहनस्य नेत्रम् अनाशयत्। चतुर्थेन बाणेन धनञ्जयः मोहनस्य पादं विद्धवान्।

'अपायस्थितौ स्थितः मोहनः बलयुतेन प्रकारेण यमसदनं प्रति प्रेषणीयः' इति चिन्तयित्वा यावत् प्रतापः तथा कर्तुम् उद्युक्तः तावता मोहनः खञ्जन् एव ततः प्रस्थाय दुर्गस्य अन्तः गतवान्। मोहनस्य चिकित्सार्थम् ऐडापर्वतात् औषधानि

आनीतानि। किन्तु ततः पूर्वम् एव मोहनः प्राणैः वियुक्तः अभवत्।

मोहनस्य मरणानन्तरं तस्य सहोदरयोः अरिभयङ्कर-चन्द्रयोः विवादः उत्पन्नः यत् भुवनसुन्दरी मया एव परिणेतव्या इति। किन्तु चन्द्रस्य अपेक्षया अरिभयङ्करः एव अधिकशौर्यवान् आसीत्। अतः निर्णीतं यत् अरिभयङ्करेण एव भुवनसुन्दरी परिणेतव्या इति।

किन्तु भुवनसुन्दरी सदा स्मरति स्म यत् अहं स्पार्टराज्ञी, प्रतापस्य पत्नी च इति। अतः सा चिन्तितवती यत् कथमपि ग्रीक्जनानां समीपं गन्तव्यम् इति। एकस्यां रात्रौ सा दुर्गभित्तिम् आरुह्य अपरपार्श्वं गन्तुं प्रयत्नं कृतवती। किन्तु तावता तत्र आगतः कश्चन रक्षकभटः तां दृष्ट्वा गृहीत्वा राजभवनं नीतवान्।

अरिभयङ्करः तां बलात्कारेण परिणीतवान्। एषः विवाहः ट्रायजनानाम् अपि असन्तोषाय अभवत्। चन्द्रः विरक्तिं प्राप्य ट्रायनगरं परित्यज्य ऐडापर्वते वासं कर्तुं प्रयाणम् आरब्धवान्।

'केनापि उपायेन यदि भवता इदानीं चन्द्रः अत्र आनीयेत तर्हि ततः ट्रायरहस्यं ज्ञायेत, तदनन्तरं युद्धे अस्माकं जयः स्यात्' इति महाराजं सूचितवान् कांशुकः।

एतं प्रस्तावं सहर्षम् अङ्गीकुर्वन् महाराजः 'कथमपि भवता चन्द्रः ग्रहीतव्यः एव' इति आदिश्य तस्मिन् एव दिने रूपधरं प्रेषितवान्।

चन्द्रः सूर्यालये हेमायाः पितुः अतिथित्वेन यदा वासं कुर्वन् आसीत् तदा





रूपधरः तम् अन्विष्यन् तत्र आगतः। "मया भयात् पलायनं तु न कृतम्। एतस्मिन् एव आलये मोहनः अक्रमेण वज्रकायं मारितवान् अस्ति । तस्य प्रायश्चित्तम् इतोऽपि न जातम्। तदेव बाधते माम्। कुत्रापि सुदूरस्थे प्रदेशे सुरक्षिततया मम वासार्थं यदि भवता व्यवस्था क्रियेत तर्हि अहं ट्राय्नगरस्य रहस्यम् अवश्यं भवन्तं वदेयम्" इति रूपधरम् उक्तवान् चन्द्रः।

एतं प्रस्तावं सन्तोषेण अङ्गीकृतवान् रूपधरः। तदनुगुणं चन्द्रस्य रक्षणार्थं योग्यां व्यवस्थां कृतवान् च।

"अग्रिमे ग्रीष्मकाले ट्राय्नगरस्य पतनं निश्चितम्। किन्तु ततः पूर्वं त्रीणि कार्याणि प्रवृत्तानि भवेयुः। तेषु प्रथमम् - पीसास्थं धूम्रमुखस्य स्कन्धास्थि भवच्छिबिरं प्रति आगच्छेत्। द्वितीयं - नवयोधः रणरङ्गं प्रविशेत्। तृतीयं - बुद्धिमतीदेव्याः विग्रहः दुर्गात् कथमपि अपहरणीयम्। यावत् स च विग्रहः तत्र तिष्ठति तावत् भवन्तः ट्राय्भित्तिं भेत्तुं न शक्नुवन्ति" इति रूपधरम् उक्तवान् चन्द्रः।

एतत् श्रुत्वा नितरां सन्तुष्टः रूपधरः राजधानीं प्रतिगत्य महाराजं ट्राय्पतनरहस्यं निवेदितवान्।

एतत् रहस्यं ज्ञात्वा महाराजः धूम्रमुखस्य स्कन्धास्थि आनेतुं कांश्चन सैनिकान् पीसां प्रति प्रेषितवान्। वज्रकायस्य द्वादशवर्षीयः पुत्रः नवयोधः स्केरास्नगरे वसति स्म। तम् आनेतुं रूपधरः, रक्तवर्णः, देवमयः च नौकाम् आरुह्य प्रस्थितवन्तः।

यदा नवयोधः रणरङ्गे पदं स्थापितवान् तदा सः पितुः वज्रकायस्य प्रेतरूपं दृष्टवान्। रूपधरः वज्रकायस्य शस्त्रास्त्राणि नवयोधाय दत्तवान्। यद्यपि नवयोधः वयसा द्वादशवर्षीयः बालः, तथापि युद्धचातुर्येण पितृसमानः एव आसीत्। सः व्यूहरचनायां ग्रीक्जनानां मार्गदर्शनं कृतवान्।

इतः परं बुद्धिमतीविग्रहस्य अपहरणमात्रम् अवशिष्टम् आसीत्। एतत् कार्यं कर्तुं रूपधरः देवमयः च सिद्धौ जातौ। देवमयात् प्रहाराणां प्राप्तितः नितरां व्रणितः, शरणं प्रार्थयमानः दासः इव अभिनयन् रूपधरः ट्राय्नगरं प्रविष्टवान्। प्रवेशसमनन्तरम् एव भुवनसुन्दरी तम्

अभिज्ञातवती । 'केन उद्देशेन एतेन एवं रूपपरिवर्तनं कृत्वा आगतम् ?' इति ज्ञातुं प्रयत्नं कृतवती सा । किन्तु रूपधरः तस्याः प्रश्नानां योग्यम् उत्तरं न दत्तवान् ।

ततः सा उपायेन तं स्वभवनं नीत्वा स्नानं कारयित्वा भोजनं च दत्त्वा - "अहम् अत्र बन्दीरूपेण अस्मि । स्वदेशः गन्तव्यः इति मम प्रबला इच्छा । एतां मम अपेक्षां केवलं मम श्वश्रूः जानाति । सा मदनुकूला एव । इदानीं भवता स्वकार्यक्रमस्य विवरणं वक्तव्यम्" इति उक्तवती ।

किञ्चित्कालं विचिन्त्य रूपधरः निर्णीतवान् - 'इदानीम् असत्यकथनेन न किमपि प्रयोजनम् । वस्तुस्थितिं यथावत् निवेदयिष्यामि । यत् भवेत् तत् भवतु नाम' इति । अनन्तरं सः स्वस्य आगमनस्य उद्देशं यथास्थितं निवेदितवान् ।

तत्समये एव वर्धनस्य पत्नी तत्र आगतवती । तां दृष्टवतः रूपधरस्य प्राणाः गताः इव । सः भयात् कम्पमानः तस्याः पादौ गृहीत्वा मम रहस्यं कुत्रापि मा प्रकटयतु कृपया" इति दैन्येन प्रार्थितवान् । आर्द्रहृदया वर्धनपत्नी एतं विषयं कुत्रापि न उक्तवती । नगरात् बहिः गमनार्थं रूपधरस्य साहाय्यं कृतवती च । नगरात् गमनसमये रूपधरः उपायेन बुद्धिमतीविग्रहं चोरितवान् ।

भित्तेः अपरपार्श्वे प्रतीक्षां कुर्वतः देवमयस्य स्कन्धे स च विग्रहः स्थापितः रूपधरेण । ततः पूर्णिमादिने रात्रौ तौ स्वशिबिरं प्रति प्रस्थितवन्तौ ।

मध्येमार्गं रूपधरस्य मनसि विचारः आगतः यत् विग्रहानयनकीर्तिः मया एकेन एव प्राप्तव्या इति । अतः सः गच्छन् एव अकस्मात् गमनं स्थगयित्वा देवमयं मारयितुं खड्गम् उन्नीतवान् । खड्गच्छायां दृष्ट्वा क्षणमात्रेण वस्तुस्थितिं जानन् देवमयः विद्युद्वेगेन स्वखड्गम् आकृष्य रूपधरं प्रहृत्य तं निरायुधं कृतवान् । ततः सः रूपधरं बद्ध्वा निरन्तरं प्रहरन् तं शिबिरं प्रति नीतवान् ।

(अनुवर्तते)



# र स वा र्ताः

## मतदानार्हाः त्रयः एव !

फेब्रवरी-मार्चमासयोः अन्येषु राज्येषु इव अरुणाचलप्रदेशे अपि विधानसभार्थं निर्वाचनं प्रवृत्तम् । तत्र कामेङ्गजनपदे मिश्मिनोबुरागोन्-मूलानां वासस्थानभूतः 'चकू' नामकः ग्रामः अस्ति । अरण्ये दिनत्रयं यावत् प्रयाणस्य अनन्तरम् एव एषः ग्रामः प्राप्तुं शक्यः ।

गते निर्वाचने मतपेटिकां, मतपत्राणि, चिह्नार्थं मषीम्, अन्यानि च साधनानि स्वीकृत्य गताः निर्वाचनाधिकारिणः चकूग्रामे मतकेन्द्रं सज्जीकृतवन्तः । तत्र मतदानार्हाः कति जनाः आसन् इति जानन्ति वा भवन्तः ? केवलं त्रयः एव । तथापि तेषां मतदानार्थं तत्र व्यवस्था कृता । अस्माकं देशे प्रजाप्रभुत्वस्य यत् प्राधान्यं परिगण्यते तत् द्योतयति एतत् ।

## चालकरहितस्य विमानस्य प्रयाणम्

फेब्रवरीमासस्य २६ तमे दिनाङ्के अमेरिकादेशे हावर्डतः जेप्लिन्विमानं प्रयाणस्य आरम्भम् अकरोत् । यदा तत् ७० मीटर् यावत् उपरि गतं तदा तस्य चालकः हृदयाघाततः आसनस्थः एव प्राणान्



अत्यजत् । तथापि विमानं न स्थितम् । तत् ३००० मीटर् यावत् गत्वा घण्टाद्वयानन्तरम् उत्तर-क्यालिफोर्नियाप्रदेशे जनरहिते स्थले भूमिं प्राप्नोत् । 'गृहस्य उपरि पतेत्' इति भीताः जनाः विमानस्य भूस्पर्शं ज्ञात्वा निरातङ्कं दीर्घं निश्श्वसितवन्तः ।

## सङ्केतरहितः मार्जारः

बाङ्ग्लादेशस्य चान्दपूरतः राजधानीं ढाकां प्रति ६५ कि.मी. यावत् कश्चन मार्जारः पत्रबन्धे पत्रैः सह प्रयाणम् अकरोत् । किन्तु तस्य ललाटे कण्ठे वा कस्यापि सङ्केतः न आसीत् । यदा पत्रालयपालैः बन्धः उद्घाटितः तदा 'म्यावँ' इति शब्दं कुर्वन् सः मार्जारः बन्धात् बहिः आगच्छत् । बन्धस्य पातनसमये प्रयाण-काले वा तेन मार्जारेण अल्पः शब्दः अपि न कृतः आसीत् । एषा घटना फेब्रवरीमासस्य पञ्चमे (५) दिनाङ्के प्रवृत्ता । सः मार्जारः कथं पत्रबन्धस्य अन्तः गतः इति अद्यावधि न ज्ञातम् अस्ति ।



## अण्टार्कटिकाप्रदेशे परिसरमालिन्यम्

'अण्टार्कटिका' इति नाम्नः श्रवणात् एव वयं शुभ्रं हिमं स्मरामः । तत्प्रदेशे 'मैक्मार्डोस्थानकम्' नाम लघुनगरम् अस्ति । तत्र ग्रीष्मकाले जनसङ्ख्या १,२००, किन्तु हेमन्तकाले २०० एव । अत्र जनाः नगरात् बहिः सुविशाले प्रदेशे शलाकादिभिः 'अग्नि' ज्वालयन्ति । खादनानन्तरम् अवशिष्टान् पदार्थान् तत्रैव क्षिपन्ति स्म । तान् खादितुं समुद्रकाकाः अन्यविधाः पक्षिणः च तत्र आगच्छन्ति स्म । स च तीरप्रदेशः मालिन्यमयः भवति स्म । एतत् असहमानाः पर्यावरण-परिवीक्षकाः केचन तत्र गत्वा तत्रत्यान् स्वच्छताविषयान् बोधितवन्तः । अतः इदानीं तत्रत्या स्थितिः किञ्चित् सज्जा जाता अस्ति ।



# चन्द्रवत्याः स्वयंवरः

प्रारब्धं कार्यम् अत्यजन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनं श्मशानमार्गम् अनुसृतवान् च । तदा शवान्तर्गतः वेताल अवदत् - ''अये राजन् ! एतस्मिन् मध्यरात्रे भयानके श्मशाने भयम् अप्राप्नुवतः भवतः प्रयत्नस्य, कठोरायाः दीक्षायाः च दर्शनात् ज्ञायते यत् भवान् कीदृशः साहसी इति । परन्तु कदाचित् अतिसाहसेन अपि किमपि साधितं न भवेत् । केषुचित् सन्दर्भेषु अयोग्यः असमर्थः अपि अदृष्टदेवतायाः करुणया प्रगतिं साधयितुं शक्नोति । अत्र सन्ति बहूनि उदाहरणानि । भवतः अवगमनार्थं स्त्रीसहजकरुणया कञ्चित् अयोग्यपुरुषं परिणीतवत्याः अपूर्वसुन्दर्याः कस्याश्चित् युवराज्ञ्याः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा –

पूर्वं कनकपुरनामकं राज्यं जयकीर्तिः नाम राजा पालयन् आसीत् । तस्य पुत्री चन्द्रवती अतीवसुन्दरी आसीत् । चतुरङ्गक्रीडायां तस्याः विशेषनैपुण्यम् आसीत् । राजा जयकीर्तिः अपि चतुरङ्गे अतीवप्रतिभाशाली आसीत् । अतः सः बाल्यतः एव समर्थानां शिक्षकाणां द्वारा पुत्र्यै उत्तमं शिक्षणं दत्तवान् आसीत् । अतः सा इदानीं चतुरङ्गक्रीडायाम् असमाना जाता आसीत् ।

एवं सति कदाचित् चन्द्रवत्याः विवाहस्य प्रस्तावः आगतः । तदा चन्द्रवती पितरम् उक्तवती – ''तात ! चतुरङ्गक्रीडायां यः मां पराजेष्यते तम् एव अहं परिणेष्यामि । यः मया सह प्रथमवारं क्रीडित्वा पराजयं प्राप्नोति सः राजकुमारः कशया शतवारं ताडनीयः । द्वितीयवारं यः पराजयं प्राप्नोति सः – 'आजीवनं अविवाहितः तिष्ठामि' इति कुलदेवतानाम्नि शपथं कुर्यात् । तृतीयवारं यः पराजयं प्राप्नोति सः मरणदण्डनेन दण्डनीयः । एषः विषयः साडिण्डिमघोषं सर्वत्र उद्घोषणीयः'' इति ।

तस्याः विचित्राम् अपेक्षां श्रुत्वा राजा आश्चर्यचकितः । तथापि पुत्र्याः स्वभावं जानन् सः तस्याः अपेक्षानुगुणम् एव उद्घोषणं कारितवान् ।

केचन राजकुमाराः सुन्दरीं चन्द्रवतीं परिणेतुं चतुरङ्गस्पर्धायां भागम् ऊढवन्तः । तेषां सर्वेषां चतुरङ्गक्रीडायां किञ्चित् प्रावीण्यम् आसीत् । तथापि ते अपूर्वं नैपुण्यं प्राप्तवत्याः युवराज्ञ्याः प्रतिस्पर्धिनः न अभवन् । स्पर्धायां भागग्राहिणः ते निश्चितसमयात् पूर्वमेव पराजयं प्राप्तवन्तः । स्वयंवरस्य नियमानुसारं कशया ताडनं प्राप्य अपमानिताः सन्तः स्वराज्यं प्रतिगताः च । द्वितीयवारं युवराज्ञ्या सह स्पर्धायां भागं स्वीकर्तुं साहसं न कृतवन्तः एव ।

एवं सति चारुशीलनगरं पालयन् रविकीर्तिः एतं विचित्रं स्वयंवरविचारं ज्ञातवान् । सः अविवाहितः आसीत् । गुप्तचराणां द्वारा राजकुमार्याः चन्द्रवत्याः सौन्दर्यविषयं ज्ञातवान् आसीत् । एतावत्-पर्यन्तं चतुरङ्गक्रीडां किञ्चिदपि अजानन् रविकीर्तिः चतुरङ्गक्रीडां ज्ञातुं निर्णयं

कृतवान् । अनुक्षणमेव रविकीर्तिः स्वराज्ये चतुरङ्गक्रीडायाः स्पर्धाम् आयोजितवान् । स्पर्धायां बहवः भागं गृहीतवन्तः । तेषु विश्वनाथः नाम चतुरङ्गनिपुणः तरुणः प्रथमं स्थानं प्राप्तवान् । एवं चतुरङ्गस्पर्धासु प्रथमस्थानं प्राप्तवतः विश्वनाथतः चतुरङ्गस्य सूक्ष्मविचारान् ज्ञातुम् उद्युक्तः अभवत् रविकीर्तिः । विश्वनाथः यद्यत् बोधितवान् तत्सर्वं श्रद्धया मनसि स्थापितवान् सः । कांश्चन मासान् यावत् एतत् शिक्षणं प्रवृत्तम् ।

एकस्मिन् दिने विश्वनाथः रविकीर्तिम् उक्तवान् - "महाराज ! भवतः शिक्षणं समाप्तम् । अतः गन्तुम् अनुज्ञां ददातु" इति । तदा रविकीर्तिः अमूल्यम् उपायनं दत्त्वा तं सम्प्रेष्य चतुरङ्गस्पर्धार्थं कनकपुरं प्रति प्रस्थितवान् ।

कनकपुरस्य प्रमुखाणां राजोद्योगिनां, चन्द्रवत्याः मातापित्रोः च सम्मुखे एव स्पर्धा आरब्धा । ऐदम्प्राथम्येन चन्द्रवत्याः सौन्दर्यं दृष्ट्वा रविकीर्तिः नितरां चकितः अभवत् । यतः तस्य गुप्तचरैः यथा वर्णितं ततोऽपि अधिकसुन्दरी आसीत् सा । स्पर्धा कुतूहलकारितया चलन्ती आसीत् । रविकीर्तिः बहु सम्यक् क्रीडन् अपि चन्द्रवत्याः अद्भुतक्रीडां समर्थतया सम्मुखीकर्तुं न शक्तवान् । क्षणद्वयाभ्यन्तरे रविकीर्तेः राजानं चन्द्रवती बद्धवती ।

युवराज्ञी जितवती इति कारणतः सभासदः सर्वे जयकारं कृत्वा अभिनन्दनं कृतवन्तः । राजभटाः कशां स्वीकृत्य अग्रे आगच्छन्तः आसन् । युवराज्ञी रविकीर्तिं





दृष्टवती । रविकीर्तिः स्वराज्यं प्रतिगच्छति इति सर्वे चिन्तितवन्तः आसन् । परन्तु सर्वेषां चिन्तनानुसारं न अभवत् । रविकीर्तिः द्वितीयवारं स्पर्धार्थः सिद्धः अभवत् ।

एतत् दृष्ट्वा - "अये, राजकुमार ! द्वितीयवारं यदि पराजयः भविष्यति तर्हि कः नियमः पालनीयः इति भवता ज्ञातं स्यात् । जीवने अपरां तरुणीं न परिणेष्यामि इति कुलदेवतानाम्ना शपथं करणीयं भवति इति स्मरति खलु भवान् ?" इति कनकपुरस्य महामन्त्री आदित्यमल्लः रविकीर्तिं जागरितवान् ।

"आं, तं नियमं जानामि अहम् । सर्वान् नियमान् ज्ञात्वा फलाफलं सम्यक् विचिन्त्य एव स्पर्धार्थम् आगतवान् अस्मि । भवताम् एषः नियमः न स्यात् चेदपि अहम् अन्यां तरुणीं न परिणयेयम् एव । तथापि भवतां सन्तोषार्थम्, अपेक्षापूरणार्थं च शपथं करोमि यत् अहं पराजितः चेत् अन्यां न परिणेष्यामि इति" इति वदन् रविकीर्तिः कुलदेवतानाम्ना शपथं कृतवान् ।

पुनः द्वितीयवारं स्पर्धा आरब्धा । इदानीं रविकीर्तिः युक्त्या क्रीडासाधनानि चालितवान् । चन्द्रवती यथापूर्वं सहजतया क्रीडन्ती आसीत् । तस्याः पाण्डित्यं प्रावीण्यं च दृष्ट्वा रविकीर्तिः चकितः । तस्याः सुन्दरं रूपं पश्यन् तत् मनसि पुनः पुनः स्मरन् सः - 'मन्त्री अग्रे नेतव्यः' इति चिन्तयन् एव गजम् अग्रे नीतवान् । तस्य एषः क्रमः दोषाय अभवत्, तावदेव ! एकेन अद्भुतचालनेन चन्द्रवती रविकीर्तिं पराजितवती । पुनरेकवारं सभायां स्थिताः सर्वे सन्तोषेण करताडनं कुर्वन्तः जयकारैः तस्याः अभिनन्दनं कृतवन्तः ।

इदानीं रविकीर्तिः निश्चयेन चारुशीलनगरं प्रतिगमिष्यति इति सर्वे चिन्तितवन्तः । किन्तु रविकीर्तेः प्रतिगमनलक्षणं तु न दृष्टम् । तदा राजा जयकीर्तिः अग्रे आगत्य तस्य स्कन्धे हस्तं स्थापयित्वा - "भोः राजकुमार ! भवान् इतोऽपि युवकः । रणविद्यासु महान् शूरः इव भासते । भवतः भविष्यम् उज्ज्वलम् अस्ति । एकस्य राज्यस्य राज्ञः भवतः बहु दायित्वम् अपि अस्ति एव । तत् सर्वं विस्मृत्य प्राणान् पणीकृत्य एतस्यां स्पर्धायाम् अग्रे गमनं

सर्वथा अनुचितम्। मम हितवाक्यं शृणोतु। कृपया, राज्यं प्रतिगच्छतु च'' इति हितोपदेशं कृतवान्।

तदा रविकीर्तिः मन्दहासेन – ''मम क्षेमार्थं भवान् हितवाक्यानि उक्तवान् यत् तदर्थं धन्यवादाः। ज्येष्ठाः वदन्ति यत् जयापजयौ दैवाज्ञानुसारं भवतः इति। तृतीयस्पर्धायां ममैव जयः इति मम अन्तरङ्गं वदति'' इति उक्तवान्।

एतत् सर्वं सम्भाषणं शृण्वती राजकुमारी आश्चर्यचकिता अभवत्। 'एतादृशः स्वभावः अपूर्वः' इति चिन्तितवती सा। अनन्तरं सा रविकीर्तिं किञ्चित्कालं निर्निमेषं दृष्ट्वा राजानं जयकीर्तिं – ''तात, एतस्यां स्पर्धायाम् अहं पराजिता इति अङ्गीकरोमि'' इति उक्त्वा लज्जया शिरः अवनमितवती।

स्पर्धां पश्यतां सर्वेषां बहु आश्चर्यम् अभवत्। द्विवारं सुलभतया जयं प्राप्तवती राज्ञी इदानीं स्पर्धायां भागम् अस्वीकुर्वती पराजयम् अङ्गीकृतवती यत् तेन ते आश्चर्यचकिताः जाताः।

राजा जयकीर्तिः तु किमपि ज्ञातवान् इव व्यवहरन् सन्तोषेण – ''योग्ये समये उत्तमनिर्णयं स्वीकृतवती भवती'' इति पुत्र्याः अभिनन्दनं कृतवान्।

वेतालः एवं कथां समाप्य अवदत् – ''राजन्! रविकीर्तिः यदा प्रथमवारं पराजयं प्राप्तवान् तदा एव तेन चिन्तनीयम् आसीत् यत् चन्द्रवतीं जेतुम् अहं न शक्नोमि इति। तथापि सः द्वितीयवारं तृतीयवारं च स्पर्धार्थं सिद्धः अभवत्। एतत् तस्य मूर्खत्वं द्योतयति किल ? स्त्रीस्वभावसहजया करुणया



तृतीयवारं राज्ञी स्पर्धार्थं न गतवती। स्वयमेव पराजयम् अङ्गीकृतवती च। यदि तथा न अभविष्यत् तर्हि रविकीर्तेः प्राणाः रक्षिताः न अभविष्यन्। एव ननु ? मम अन्यः अपि सन्देहः नाम युवराज्ञी स्त्रीसहजकरुणया व्यवहृतवती स्यात्, उत पराजयभीत्या तृतीयवारं स्पर्धायां भागग्रहणं निराकृतवती स्यात्' इति। युक्ते समये सम्यक् निर्णयं स्वीकृतवती इति जयकीर्तेः वचनमपि तस्मिन् समये अनपेक्षितमिति भासते खलु ? एतेषां मम सन्देहानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् असमर्थः त्रिविक्रमः एवम् उक्तवान् - ''चतुरङ्गे अहं चन्द्रवल्याः समानः न इति रविकीर्तिः जानाति स्म एव। तथापि द्वितीयवारं तृतियवारं च पुनः तया सह सः स्पर्धां कृतवान् इत्यतः ज्ञातुं शक्यते यत् तस्याः विषये अमिता प्रीतिः तस्य अस्ति इति। एतं विषयं बुद्धिमती चन्द्रवती अपि ज्ञातवती। चन्द्रवती स्वस्य स्वयंवरार्थं चतुरङ्गक्रीडां निमित्तमात्रेण योजितवती आसीत्। घट्टत्रयात्मिकायाम् एतस्यां स्पर्धायां रविकीर्तिः एकः एव घट्टद्वयम् अतिक्रम्य तृतीयघट्टे स्वस्य प्राणान् पणीकर्तुं सिद्धः दृष्टः। चन्द्रवल्याः इच्छा अपि 'एतादृशः परिणेतव्यः' इत्येव आसीत्। यः प्राणापायम् अपि तृणाय मन्यते सः निश्चयेन गाढानुरागेण युक्तः भवति इति सा जानाति स्म। जयप्राप्त्यर्थं स्पर्धायोजनं न कारितवती आसीत् सा, अपि तु अनुरागवन्तम् अभिज्ञातुं सा स्पर्धामाध्यमम् उपयुक्तवती आसीत्। स्वस्य चयनम् उत्कृष्टम् इति यदा सा ज्ञातवती तदा बुद्धिमत्तया व्यवहृत्य स्वयं पराजयम् अङ्गीकृतवती। अत्र करुणायाः प्रसक्तिः नास्ति एव। एतत् ज्ञात्वा एव जयकीर्तिः पुत्र्याः अभिनन्दनं कृतवान्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः बेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# बुद्धिमत्ता

कमलापुरवासिनः वणिजः रामानुजस्य पुत्रः माधवः अष्टवर्षीयः। बाल्ये एव सः सर्वेषु विषयेषु महतीं बुद्धिमत्तां प्रदर्शयति स्म। अतः ग्रामीणाः सर्वे माधवं 'तीक्ष्णमतिः' इति, 'महाबुद्धिमान्' इति च प्रशंसन्ति स्म।

कदाचित् मणिकण्ठः नाम कश्चन बन्धुः रामानुजस्य गृहम् आगतवान्। माधवः महाबुद्धिमान् इति वचनं तेनापि बहुधा श्रुतम् आसीत्। प्रतिगमनात् पूर्वं सः माधवस्य बुद्धिमत्तां परीक्षितुम् इच्छन् एकं रजतनाणकम्, एकं ताम्रनाणकं च माधवस्य पुरतः स्थापितवान्, 'एतयोः अन्यतरत् नाणकं स्वीकरोतु भवान्' इति माधवम् उक्तवान् च।

तदा माधवः ताम्रनाणकम् एव स्वीकृतवान्। तदा मणिकण्ठः - "अये मन्दमते! ताम्रनाणकं वर्णमयं चेदपि तस्य मूल्यं न्यूनम्। एतत् एव न ज्ञायते भवता। अहो महाबुद्धिमत्त्वं भवतः!" इति उक्त्वा रजतनाणकं कोषे स्थापितवान्। गमनात् पूर्वं पार्श्वगृहस्थान् अन्यान् परिचितान् च एतं प्रसङ्गं हसन् उक्तवान्।

ते मणिकण्ठेन उक्तां घटनां श्रुत्वा माधवस्य बुद्धिहीनतां स्मरन्तः हसितवन्तः।

महाबुद्धिमान् इति ख्यातस्य माधवस्य अल्पमतित्वं दृष्ट्वा हसने ग्रामीणानां विशेषासक्तिः उत्पन्ना। अतः यदा माधवः दृश्यते तदा रजतनाणकं ताम्रनाणकं च पुरतः संस्थाप्य ग्रामीणाः - 'यत् इष्टं तत् स्वीकरोतु' इति वदन्ति स्म। माधवः सर्वदा ताम्रनाणकम् एव स्वीकरोति स्म। एतत् दृष्ट्वा ते सन्तोषेण हसन्ति स्म।

कदाचित् माधवस्य मातुलः सोमशेखरः रामानुजस्य गृहम् आगतवान्। प्रतिवेशिनां द्वारा तेनापि ज्ञातं यत् माधवः

रजत-ताम्रनाणकयोः ताम्रनाणकम् एव स्वीकरोति इति।

एतत् श्रुत्वा सः चिन्तितवान् - 'माधवः पितुः वाणिज्यं वर्धयिष्यति इति निरीक्षा आसीत्। किन्तु इदानीं पश्यामः चेत् भासते यत् माधवः अपि मन्दमतिः एव इति' इति।

यत् अन्येषां मुखतः श्रुतं तत् दृढीकर्तुम् इच्छन् सोमशेखरः कदाचित् माधवम् आहूय रजतनाणकं ताम्रनाणकं च प्रदर्शयन् 'यत् भवते रोचते तत् स्वीकरोतु' इति उक्तवान्।

तदा अपि माधवः ताम्रनाणकम् एव स्वीकृतवान्। माधवः मन्दमतिः एव इति निश्चित्य सोमशेखरः खेदेन उक्तवान् - "वत्स माधव ! किम् एतत् ? रजतनाणकं खलु भवता स्वीकरणीयम् आसीत् ? किमर्थं ताम्रनाणकं स्वीकृतवान् भवान् ? कस्य स्वीकरणात् अधिकः लाभः इति न जानाति वा भवान् ? एवं चेत् भाविनि काले भवान् पितुः वाणिज्यं कथं वा समर्थतया अनुवर्तयितुं शक्नुयात् ?" इति।

तदा माधवः मन्दहासपूर्वकं - "मातुलः ! यदि अहं रजतनाणकं स्वीकुर्यां तर्हि ग्रामे कोऽपि विनोदार्थं मम पुरतः नाणकस्थापनम् एव न अकरिष्यत्। तदा मया नाणकानि एव प्राप्तानि न अभविष्यन्। इदानीं पश्यतु, मम बुद्धिहीनतां पुनः पुनः द्रष्टुम् इच्छन्तः ते मम पुरतः नाणकद्वयं स्थापयन्ति। अहं ताम्रनाणकम् एव स्वीकरोमि। ततः इदानीं मया करण्डकपरिमितानि ताम्रनाणकानि सम्पादितानि सन्ति। यदि अहं रजतनाणकं स्वीकृतवान् स्यां तर्हि किं मम एतावान् आयः अभविष्यत् ?" इति प्रतिप्रश्नं कुर्वन् आत्मना सङ्गृहीतानां नाणकानां करण्डकम् आनीय मातुलाय प्रदर्शितवान्।

तत्र स्थितानि पञ्चशताधिकानि ताम्रनाणकानि दृष्ट्वा आश्चर्यं सन्तोषं च अनुभवन् सोमशेखरः यावत् किमपि वक्तुम् उद्युक्तः तावता माधवः एव पुनः उक्तवान् - "मातुल ! मम एतत् रहस्यं कमपि मा वदतु कृपया। अन्ये यावत् मां बुद्धिहीनं भावयन्ति तावत् मम लाभः अधिकः" इति।





## अस्मद्देशीयानि दुर्गाणि - ३

# रजपूतानां दुर्गाणि - १

चित्राङ्गदमोरीनामकः राजा सप्तमे शतके चित्रकूटदुर्गं निर्मितवान् । शतवर्षाणाम् अनन्तरं सुप्रसिद्धः गुहिल्नायकः बप्परावलः एतस्य दुर्गस्य नाम 'चित्तोर' इति परिवर्तितवान्, तस्मिन् स्वस्य वासम् आरब्धवान् च ।

बप्परावलवंशीयाः शशोदीयाः चित्तोरदुर्गं ८०० वर्षाणि यावत् पालितवन्तः । दुर्गस्य प्राङ्गणे अद्यापि कश्चन विजयस्तम्भः विराजते । कुम्भराणावर्यः १४५८ तमे वर्षे मालवाराजं (सुल्तान्) जित्वा विजयसङ्केतरूपेण एतं 'विजयस्तम्भं' निर्मितवान् । नवभिः अट्टैः युक्तस्य एतस्य औन्नत्यं ३६ मीटर्परिमितम् । एतस्य निर्माणार्थं प्रायः दशवर्षात्मकः कालः उपयुक्तः ।

चित्तोरदुर्गस्य वैशाल्यम् अस्माकं देशस्य सर्वेषां दुर्गाणाम् वैशाल्यस्य अपेक्षया अधिकम् अस्ति । एतस्य दुर्गस्य अन्तः बहवः कूपाः सन्ति, येषां च उपयोगः पानार्थं कृष्यर्थं च क्रियते स्म । वर्षद्वयात्मकम् आक्रमणम् अपि सम्मुखीकर्तुं समर्थम् आसीत् तत् दुर्गम् । वर्षद्वयार्थं यावत् आवश्यकं तावत् आहारादीनां सङ्ग्रहः तत्र भवति स्म ।

'सबात' नामकेन रक्षणात्मकमार्गेण चित्तोरदुर्गं प्रविशन्ती मोगलसेना ।



रामपालद्वारम्, चित्तोरगढ

१५६७ तमे वर्षे अकबरस्य नेतृत्वेन युक्तं मोगलसैन्यम् एतस्य उपरि आक्रमणम् अकरोत् । राणा उदयसिंहः एतस्य दुर्गस्य रक्षणभारं जयमल्ल-पत्तानामकयोः सेनानायकयोः उपरि निक्षिप्य अरावलीपर्वतप्रदेशं प्रति गतवान् ।

जयमल्लस्य नेतृत्वे तदनुयायिनः वीरोचितेन शौर्येण दुर्गस्य रक्षणं कृतवन्तः । मोगलसेना अत्र पदं स्थापयितुं न शक्नुवती । चतुर्णां मासानां युद्धस्य अनन्तरं कदाचित् आग्नेयास्त्रगोलकस्य प्रहारेण जयमल्लः तीव्रं व्रणितः अभवत्, तत्रैव प्राणान् अत्यजत् च । तस्य मरणात् रजपूतसैनिकानां धैर्यं नष्टं जातम् । किङ्कर्तव्यतामूढं रजपूतसैन्यं पराजित्य मोगलसैन्येन विजयः सम्पादितः ।

दुर्गं मोगलानाम् अधीनं जातं चेदपि राणा उदयसिंहः शत्रून् शरणं गन्तुं सिद्धः न जातः । तस्य पुत्रः राणाप्रतापः तदनुयायिनः च कठोरां प्रतिज्ञां कृतवन्तः यत् यावत् दुर्गं न स्वायत्तीक्रियते तावत् सुखजीवनं न आश्रीयते इति ।

एवं प्रतिज्ञां कृतवत्सु लोहकाराः अपि अन्यतमाः । ते प्रतिज्ञां कृतवन्तः यत् यावत् दुर्गं न प्रतिप्राप्यते तावत् गृहेषु वासः न क्रियते इति । ततः आरभ्य ते शकटैः सञ्चरन्तः शकटेषु एव वासम् आरब्धवन्तः । तान् जनाः 'शाकटलोहकाराः' इति निर्दिशन्ति स्म । ततः ४०० वर्षाणि यावत् ते एतादृशम् एव जीवनं यापितवन्तः । यदा दुर्गं रजपूतानाम् अधीनं जातं तदा एव ते एतादृशं जीवनं परित्यक्तवन्तः ।

उदयपुरसमीपे एव १४८५ तमे वर्षे कुम्भराणावर्यः कुम्भलगढनामकं दुर्गं निर्मितवान् । एतस्य दुर्गस्य चतस्रः भित्तयः तत्प्रदेशीयान् पर्वतान् अभिव्याप्य तिष्ठन्ति ।

सप्तमीटरविशालस्य एतस्य दुर्गस्य भित्तेः उपरि सप्त अश्वारोहिणः युगपत् सञ्चारं कर्तुं शक्नुवन्ति स्म । एतस्य दुर्गस्य उपरि बहूनि आक्रमणानि जातानि । किन्तु एकवारम् एव



कुम्भलगढनामकस्य दुर्गस्य भित्तिः

अकबरः एतत् दुर्गं वशीकर्तुं शक्तवान् आसीत्, तदपि अल्पकालं यावत् एव।

राणाथाम्भोरनामकस्य दुर्गस्य निर्माणं ११९२ तमे वर्षे सम्पन्नम्। एतत् दुर्गम् अपि सप्तानां पर्वतानां मध्ये निर्मितम् आसीत्। भरतपुरम्, आग्रा, जयपुरम्, चित्तौर, ग्वालियर् इत्येतेभ्यः दुर्गेभ्यः समानदूरे रहस्यप्रदेशे एतत् दुर्गं निर्मितम् आसीत्। पर्वतानां मध्ये घनारण्ये



राणाथाम्भोरदुर्गात् (वामतः दृश्यमानात्) बहिः तात्कालिकतया निर्मितात् दुर्गात् (दक्षिणतः दृश्यमानात्) गोलकास्त्रप्रयोगं कुर्वन्तः मोगलसैनिकाः।

निर्मितस्य एतस्य दुर्गस्य समीपे आक्रमकारिणां गमनं सर्वथा दुष्करम् आसीत्।

१२०९ - १५६९ वर्षयोः अभ्यन्तरे एतस्य दुर्गस्य उपरि बहुवारं शत्रूणाम् आक्रमणं जातम्। हम्मीरदेवस्य शासनकाले अल्लाउद्दीनखिल्जेः कस्मैचित् सेनापतये अत्र आश्रयः दत्तः आसीत्। सः खिल्जीशासनविरुद्धं कार्यं कृतवान् आसीत्। अतः खिल्जीसैन्येन एतत् दुर्गम् आक्रान्तम्। किन्तु तेन जयः तु न प्राप्तः। अन्ते अनन्यगतिकतया तेन सैन्येन पलायनं कृतम्।

१३०१ तमे वर्षे द्वितीयवारं यदा अत्र आक्रमणं प्रवृत्तं तदा अल्लाउद्दीनखिल्जी सेनानायकत्वं स्वयं निर्वोढुं निश्चितवान्। तत्समये हम्मीरदेवस्य मन्त्रिभ्यां द्रोहः आचरितः। एतस्य कारणतः एतत् दुर्गं शत्रुवशं जातम्। युद्धे हम्मीरदेवस्य मरणं जातम्। शूरं साहसशीलं तस्य सेनाधिपतिं महम्मदशाहं शत्रवः गृहीतवन्तः,

मारितवन्तः च ।

१५६९ तमे वर्षे अकबरेण एतस्य दुर्गस्य उपरि आक्रमणं कृतम् । एतस्य दुर्गस्य भित्तिं भेत्तुं २०० वृषभैः उह्यमानैः शकटैः महान्ति आग्नेयास्त्राणि आनीतानि । तथापि अकबरेण दुर्गं वशीकर्तुं न शक्तम् । आक्रमणम् अनुवृत्तम् । अन्ते अकबरः अम्बरराजं भगवानदासं रणथाम्भोराधिपेन रावसूर्जनवर्येण सह सन्धिविषये वार्तालापं कर्तुं प्रेषितवान् । ततः जातस्य सन्धेः कारणतः तत्र शान्तिः स्थिरतां गता । दुर्गं परितः यत् अरण्यम् अस्ति तत् इदानीम् अभयारण्यं जातं सत् व्याघ्राणां वासस्थानं जातम् अस्ति ।



मारवारस्य राजधानी माण्डोर । पञ्चदशे शतके राठौडराजः रावजोधावर्यः स्वराजधानीं ततः नवमैल्दूरे स्थितं पर्वतं प्रति नेतुम् इच्छति स्म । स्वनाम प्रसिद्धीकर्तुम् इच्छन् सः जोधपुरं स्थापितवान् । १४५९ तमे वर्षे मेह्रानगडदुर्गं निर्मितम् अभवत् ।

एतस्य प्रदेशस्य अन्यदुर्गाणाम् उपरि यथा मोगलजनानाम् आक्रमणं जातं तथा तु एतस्य दुर्गस्य उपरि न जातम् । प्रत्युत पार्श्ववर्तिनः रजपूतराजाः एव बहुवारम् आक्रमणं कृतवन्तः ।

एतस्मिन् दुर्गे इदानीं किलकिला, शम्भुभान, माजीखान् इत्येतादृशानि अपूर्वाणि आग्नेयास्त्राणि सङ्गृहीतानि सन्ति ।



मेह्रानगड, जोधपुरम् ।

 



# वृथानिन्दनप्रवृत्तिः

वागीशः कश्चन कृषिकः । तस्य एकं दौर्बल्यं नाम वृथानिन्दनप्रवृत्तिः । श्यालः रङ्गराजः सर्वदा वदति स्म यत् भवता एषा निन्दनप्रवृत्तिः परित्यक्तव्या इति । तथापि वागीशस्य स्वभावे परिवर्तनं तु न जातम् ।

कदाचित् वागीशः गृहस्य पृष्ठभागे गच्छन् आसीत् । एवं गच्छतः तस्य पादः अकस्मात् स्खलितः । तदा सः यद्यपि झटिति पार्श्वस्थां वृक्षशाखाम् आधाररूपेण गृहीत्वा आत्मनः पतनं निवारितवान्, तथापि पादस्य अस्थिव्यावर्तनं तु जातम् एव । तावता तत्र आगता पत्नी सीता एतत् दृश्यं दृष्ट्वा उच्चैः हसितवती ।

एतत् दृष्टवतः वागीशस्य महान् कोपः आगतः । सः कोपेन पत्नीम् उक्तवान् - ''पतिव्रतानां भूमौ जाता, पतिव्रतायाः नाम एव धरन्ती भवती पत्युः कष्टं दृष्ट्वा निर्लज्जं हसति खलु ! धिक् भवतीम् । पततु भवती कुत्रापि निर्जले कूपे'' इति ।

सीता पुनरपि हसन्ती ततः निर्गतवती । वागीशः तत्रैव उपविश्य पादस्य संवाहनं कृतवान् । ततः महती वेदना अपगता चेदपि अल्पा वेदना तु अवशिष्टा एव । अतः सः खञ्जन् मन्दं पदानि स्थापयन् गृहं प्राप्तवान् ।

तदा श्यालः रङ्गराजः हसन् पृष्टवान् - ''कूपसमीपात् द्वारपर्यन्तम् आगन्तुम् एतावान् समयः किमर्थम् ?'' इति ।

''तन्नाम एतावत्पर्यन्तं भवान् अपि अत्रैव तिष्ठन् मम कष्टं दृष्ट्वा सन्तोषं प्राप्तवान् !! किञ्चित् साहाय्यं करणीयम् इति बुद्धिः न उत्पन्ना खलु भवति ?'' इति कोपेन उक्तवान् वागीशः ।

''भवान् यदा खञ्जन् पादं स्थापयति स्म तदा मम महान् हासः भवति स्म । हसता मया एषः प्रपञ्चः एव विस्मृतः आसीत्'' इति

''भामहः''



उक्तवान् रङ्गराजः।

"सर्वे वक्रबुद्धयः एव। ज्येष्ठाः आदरेण द्रष्टव्याः इति विवेकः अपि नास्ति भवताम्। एतादृश्यजीवनस्य अपेक्षया सर्वेषां कूपे पतनं वरं स्यात्" इति कोपेन एव उक्तवान् वागीशः।

रङ्गराजः हसन् एव ततः निर्गतवान्। वागीशः मन्दं पदानि स्थापयन् गृहद्वारसमीपम् आगतवान्। तावता तत्र कश्चन खञ्जः भिक्षुकः आगतवान्। सः वागीशं दृष्ट्वा पृष्टवान् - "खञ्जः अस्मि श्रीमन्! भिक्षया अनुगृह्णातु माम्" इति।

वागीशः कष्टेन चत्वारि पदानि स्थापयित्वा अग्रे आगत्य भिक्षुकम् उद्दिश्य - "ममापि अद्य खञ्जता आगता। तथापि किम् अहं भवान् इव भिक्षायाचनं कुर्वन् अस्मि?" इति पृष्टवान्।

"भिक्षायाचनस्य आवश्यकता नास्ति भवतः। अतः भवान् भिक्षां न याचते। अद्य भवतः अपि खञ्जता खलु? अतः त्रिचतुराणि गृहाणि गत्वा भिक्षायाचनं करोतु। तदा ज्ञायते मम कष्टं कीदृशम् इति" इति उक्तवान् भिक्षुकः।

"अहो धार्ष्ट्यं भवतः। माम् एव भिक्षायाचनार्थं प्रेरयति भवान्! पङ्कमये कूपे भवादृशस्य दुष्टस्य पतनम् एव शोभते" इति क्रोधेन उक्तवान् वागीशः। भिक्षुकः हसन् ततः निर्गतवान्।

वागीशः खञ्जन् एव गत्वा गृहस्य पुरतः वितर्दिकायाम् उपविष्टवान्। तावता तत्र चत्वारः बालाः आगताः। प्रतिदिनं ते केनापि व्याजेन वागीशं कोपयन्ति स्म। वागीशः तान् कोपेन निन्दति स्म। वागीशस्य कोपं दृष्ट्वा ते आनन्दं प्राप्नुवन्ति स्म।

अद्य ते नूतनक्रीडां क्रीडन्तः आसन्। एकः हस्ताभ्यां नेत्रे निमील्य अन्धः इव व्यवहरन् आसीत्। अपरः कर्णौ पिधाय बधिरः इव व्यवहरति स्म। तृतीयः मुखं पिधाय मूकम् अनुकुर्वन् आसीत्। चतुर्थः खञ्जताम् अभिनयन् सञ्चरति स्म। चतुर्थः अन्यान् उक्तवान् - "भवतां नाम किम् इति अहं न जानामि। मम नाम तु वागीशः इति" इति।

एतत् श्रुत्वा अन्ये हसितवन्तः। एतम् उपहासं सोढुम् अशक्नुवन् वागीशः तान् बहुधा निन्दितवान्। ते बालाः हसन्तः ततः

गतवन्तः ।

ततः अल्पे एव काले कश्चन तत्र आगतवान् । सः इतःपूर्वं न दृष्टः आसीत् वागीशेन । वागीशेन पृष्टः सः उक्तवान् – ''अहं सीतारामवर्यस्य सद्योनियुक्तः सेवकः अस्मि । वागीशवर्यं किञ्चित् वक्तुम् अहम् अत्र आगतः'' इति ।

''अहम् एव अस्मि वागीशः । यत् वक्तव्यं तत् वदतु तावत्'' इति उक्तवान् वागीशः ।

''भवान् एव वागीशवर्यः इति कथम् अहं विश्वसिमि ? भवान् कानिचन पदानि स्थापयतु । वागीशवर्यः कः इति मया यदा पृष्टं तदा मार्गे मिलिताः चत्वारः बालकाः उक्तवन्तः यत् खञ्जन् यः चलति सः वागीशवर्यः इति । मम स्वामी स्पष्टं सूचितवान् अस्ति यत् एतं सन्देशं वागीशम् एव सूचयतु, नान्यम् इति'' इति उक्तवान् सेवकः ।

''अये ! सेवकस्य भवतः पुरतः मया खञ्जता प्रदर्शनीया ? गार्दभेय ! भवादृशाः इतोऽपि लोके कथं जीवन्ति, गभीरे किमर्थं कूपे न पतन्ति इत्येव आश्चर्यं मम ...'' इत्येवं बहुधा सेवकं निन्दितवान् वागीशः ।

यदा निन्दनं स्थगितं तदा सेवकः – ''भवान् एव वागीशः इति मया अवगतम् इदानीम् । मम स्वामी उक्तवान् आसीत् यत् यः निरन्तरं निन्दति सः एव वागीशः इति । अतः मम स्वामिनः सन्देशं शृणोतु तावत् । भवता अविलम्बेन मम स्वामिनः नूतनं गृहं प्रति आगन्तव्यम्'' इति सूचितवान् ।

''तत् नूतनं गृहं कुत्र अस्ति ?'' इति पृष्टवान् वागीशः ।





"इतः चतुर्णां गृहाणाम् अनन्तरम् एकः उपमार्गः अस्ति। तत्र वागीशशुनकः अस्ति। तत्र वामतः गतं चेत् अपरः उपमार्गः दृश्यते। तत्र वागीशवृषभः दृश्यते। ततः अग्रे निम्बवृक्षसहितं गृहं दृश्यते । तस्य पार्श्वे अन्यः मार्गः अस्ति । तत्र वागीशमहिषः दृश्यते। सः यत्र बद्धः दृश्यते तस्य पुरतः एव अस्ति मम स्वामिनः नूतनं गृहम्" इति विवरणम् उक्तवान् सेवकः।

"अये वैधेयेय ! वानरमुख ! गर्दभकर्ण ! सेवकस्यापि भवतः कियत् धाष्टर्यम् ! पशून् अपि मम नाम्ना निर्दिशति खलु भवान् ? भवादृशः कूपे पतनेन यदि मरणं प्राप्नुयात् तर्हि का हानिः स्यात् ?" इत्येवं निन्दनवर्षणं कृतवान् वागीशः।

निन्दनवर्षणसमाप्तेः अनन्तरं सेवकः शान्तस्वरेण - "मया अनुचितं किमपि न उक्तम्। मया ये ये पशवः सूचिताः ते सर्वे ब्रज्ञाः । अतः मया तथा निर्दिष्टम्" इति उक्त्वा ततः निर्गतवान्।

सीतारामविषये वागीशस्य विशेषादरः आसीत्। अतः सः ब्रजन् एव सीतारामस्य नूतनं गृहम् अन्विष्य गतवान्। मार्गे खञ्जस्य शुनकस्य, वृषभस्य, महिषस्य च दर्शनात् तस्य कोपः नितरां प्रवृद्धः।

यदा वागीशः आगतवान् तदा सीतारामः सन्तोषेण तं स्वागतीकृतवान्। तदा वागीशः पृष्टवान् - "भवतः अत्र वासः कथम् ? एतत् नारायणस्य गृहं खलु ?" इति।

तदा सीतारामः उक्तवान् - "आम्। एतत् गृहं नारायणस्य एव। किन्तु सः अन्यं ग्रामं सपरिवारं गतवान् अस्ति। गमनसमये मह्यं कुञ्चिकां यच्छन् सः उक्तवान् आसीत् यत् आवश्यकता भवति चेत् मम गृहम् उपयोक्तुम् अर्हति भवान् इति। ह्यः मम मातुलेयः सपरिवारम् आगतवान्। तस्य परिवारस्य वासः अत्र कल्पितः मया। मम मातुलेयस्य पुत्री गौरी केनाऽपि कारणेन भीता इति भाति। सा नेत्रे सुविशालम् उन्मील्य किमपि पश्यन्ती तिष्ठति। वैद्यः तां परीक्ष्य उक्तवान् अस्ति यत् एषा यदि सकृत् सम्यक् हसेत् तर्हि सर्वं सम्यक् भवेत् इति। महता प्रयत्नेन अपि वयं तां हासयितुं न शक्ताः। अतः अहं भवन्तम् आनायितवान्" इति।

"यत् कर्तुं भवन्तः न शक्तवन्तः तत् कर्तुम् अहं कथं वा शक्नुयाम् ?" इति आश्चर्येण पृष्टवान् वागीशः।

"कुतो वा भवता न शक्येत ? मया श्रुतं यत् भवतः खञ्जतायुक्तं गमनं सर्वेषु हासं जनयति इति । अतः भवान् मम मातुलेयपुत्र्याः पुरतः खञ्जन् सञ्चरन् तां किञ्चित् हासयतु" इति प्रार्थितवान् सीतारामः।

सीतारामस्य एतत् वचनं वागीशे कोपम् अजनयत्। सः सीतारामं सम्यक् अनिन्दत्। तावता अपि तस्य तृप्तिः न जाता। अतः सः गौरीसमीपं गत्वा ताम् उन्नीय - "अये उलूकवक्त्रे ! अङ्गुष्ठमात्रम् अपि अप्रवृद्धा भवती अपि किं मम उपहासं कर्तुम् इच्छति ? एवं तर्हि उलूकः इव प्राचीने कूपे कुतो वा वासः न क्रियते भवत्या ?" इत्येवं तां निरन्तरं निन्दितवान्।

एतत् श्रुत्वा गौरी हसितवती। अल्पे एव काले हासः स्थगितः। आश्चर्यं नाम तावता सा सामान्यस्थितिं प्राप्तवती आसीत् । वागीशः अपि गौर्यां जातं परिवर्तनं दृष्ट्वा आश्चर्यचकितः। गौरीं सामान्यस्थितिमतीं दृष्ट्वा सर्वे वागीशस्य प्रशंसां कृतवन्तः।

तदा वागीशः उक्तवान् - "एवं तर्हि गौर्याः अस्वास्थ्यं वास्तविकम् आसीत्! मया चिन्तितम् आसीत् यत् मम उपहासार्थं भवन्तः असत्यं कथयन्तः सन्ति इति। अद्य अकस्मात् जातस्य अस्थिव्यावर्तनस्य कारणतः अहं खञ्जन् अस्मि । एषा खञ्जतायुक्ता मम गतिः भवताम् उपहासस्य विषयः जातः खलु !" इति।

तदा सीतारामः उक्तवान् - "भवतः खञ्जताविषये अस्माकं खेदः अस्ति एव । भवान् सर्वान् सर्वदा वृथा निन्दति खलु। सा भवतः प्रवृत्तिः, ततः भवान्, भवतः खञ्जता चापि सर्वेषाम् उपहासविषयः जातः। एवं सर्वस्य कारणं भवतः वृथानिन्दनप्रवृत्तिः एव" इति।

एतत् श्रुत्वा वागीशः वस्तुस्थितिम् अवगतवान्। ततः आरभ्य वृथानिन्दनप्रवृत्तिं परित्यक्तवान् सः।





# वैद्यस्य चयनम्

लक्ष्मीपुरे सूर्यभूपतिः नाम कश्चित् भूस्वामी आसीत् । सः धार्मिकः दयालुः च आसीत् । सः लक्ष्मीपुरे एकं निःशुल्कवैद्यशालां निर्मितवान् आसीत् । परितः स्थितेषु ग्रामेषु ये निवसन्ति स्म ते सर्वे चिकित्सार्थं लक्ष्मीपुरं प्रति एव आगच्छन्ति स्म । तत्र कारणं लक्ष्मीपुरस्य वैद्यशालायाः वृद्धवैद्यः नीलकण्ठशास्त्री ।

तादृशः नीलकण्ठशास्त्री कदाचित् वार्धक्यकारणात् मरणं प्राप्तवान् । तस्य मरणकारणात् ग्रामीणाः सूर्यभूपतिः च 'अग्रे किम्' इति चिन्तां प्राप्तवन्तः । तदा तस्य स्नेहिताः सूचितवन्तः - ''नीलकण्ठशास्त्रिणः चतुर्षु प्रमुखेषु शिष्येषु एकस्य बुद्धिमतः शिष्यस्य चयनं करोतु इति भवतः आप्तमित्रं चन्द्रवर्माणं निवेद्य समस्यायाः परिहारं प्राप्नोतु'' इति ।

एतदनुगुणं सूर्यभूपतिः चन्द्रवर्माणं समस्यां निवेद्य परिहारं प्रार्थितवान् । तदा चन्द्रवर्मा - ''तर्हि नीलकण्ठशास्त्रिणः चतुरः शिष्यान् अपि सूचयतु यत् श्वः प्रातः अष्टवादने कार्यालयं प्रति आगन्तव्यम् इति । प्रतिभावतः वैद्यस्य चयनम् अहं करिष्यामि'' इति सूर्यभूपतिं सूचितवान् ।

चन्द्रवर्मा यथा सूचितवान् तथैव नीलकण्ठशास्त्रिणः शिष्यान् उद्दिश्य सूचनां प्रेषितवान् सूर्यभूपतिः । भूस्वामिना प्रेषितां सूचनां ज्ञात्वा चत्वारः अपि नीलकण्ठशास्त्रि-शिष्याः परेद्युः प्रातः भूस्वामिनः कार्यालयं प्रति आगताः ।

तत्रत्याः कर्मकराः तान् स्वागतीकृत्य आसने उपवेश्य उक्तवन्तः - ''भूस्वामी किमपि विशेषकार्यं कुर्वन् अस्ति । सः सूचितवान् अस्ति यत् भवद्भिः किञ्चित् प्रतीक्षा करणीया इति'' इति । ते भूस्वामिनं प्रतीक्षमाणाः तत्रैव उपविष्टवन्तः । किन्तु

दीर्घकालः अतीतः चेदपि भूस्वामी न आगतवान् एव । अन्ते द्वादशवादनसमये भूस्वामी चन्द्रवर्मणा सह तेषां समीपम् आगतवान् । तौ दृष्ट्वा चत्वारः अपि गौरवेण उत्थाय स्थितवन्तः । तान् परीक्षादृष्ट्या परिशीलयन्तौ तौ द्वौ अपि तान् उपवेष्टुं सूचयन्तौ स्वयमपि आसने उपविष्टवन्तौ ।



तस्मिन् समये कश्चित् कर्मकरः अर्धजलयुक्तं काचकपात्रं भूस्वामिनः पुरतः विद्यमानायाः उत्पीठिकायाः उपरि स्थापयित्वा गतवान् । कर्मकरस्य गमनस्य अनुक्षणं चन्द्रवर्मा श्रीकण्ठशास्त्रिणः शिष्यान् उद्दिश्य - ''इदनीम् अहं प्रश्नत्रयं पृच्छामि । भवद्भिः एकैकशः आगत्य प्रश्नस्य उत्तरं वक्तव्यम्'' इति उक्तवान् । ततः जयन्तनामकं स्वसमीपम् आहूतवान् च ।

यदा जयन्तः समीपम् आगतः तदा चन्द्रवर्मा उत्पीठिकायाः उपरि विद्यमानं तत् काचकपात्रं दर्शयित्वा - ''एतत् उद्दिश्य एकं वाक्यं वदतु'' इति उक्तवान् ।

वैद्यकीयविषये प्रश्नं पृच्छति एषः इति चिन्तितवान् आसीत् जयन्तः । किन्तु एतं प्रश्नं श्रुत्वा कुपितः अपि सः कोपम् अप्रदर्शयन् - ''तस्मिन् काचकपात्रे अर्धांशमात्रं जलम् अस्ति'' इति उक्तवान् ।

तस्य उत्तरं श्रुत्वा चन्द्रवर्मा ''साधु !'' इति उक्त्वा - ''जयन्त ! भवतः पुरतः विद्यमाने उद्याने एकस्मिन् वृक्षे पर्णानि एव न सन्ति खलु । सः वृक्षः प्रायः शुष्कः जातः अस्ति । तं वृक्षम् उद्दिश्य एकं वाक्यं वदतु'' इति सूचितवान् ।

एतत् श्रुतवतः जयन्तस्य कोपः प्रवृद्धः । सः कोपमिश्रितेन स्वरेण - ''ऋतु-परिवर्तनकारणात् वृक्षात् पर्णानि पतितानि सन्ति'' इति उक्तवान् ।

तदा अन्तिमं प्रश्नं पृष्टवान् चन्द्रवर्मा - ''पूर्वतनं प्रश्नद्वयम् अहं किमर्थं पृष्टवान् इति भवान् ज्ञातवान् वा ?'' इति ।

एतं प्रश्नं श्रुत्वा जयन्तः मूकः जातः । उत्तरं दातुम् एव अशक्तः सः यद् स्फुरितं तद् क्षीणस्वरेण उक्तवान् ।

जयन्तस्य उत्तराणि श्रुत्वा हसन् चन्द्रवर्मा - ''तत्र गत्वा उपविशतु कृपया'' इति सूचितवान् । ततः अन्यान् अपि एकैकशः आहूतवान् । तथा आगतेषु नरेन्द्रः

मोहनः चापि, जयन्तः यादृशम् उत्तरं दत्तवान् आसीत् तादृशम् एव उत्तरम् उक्तवन्तौ । किन्तु अन्ते आगतः ललितः काचकपात्रं दृष्ट्वा - "इदानीम् एव यत्र अर्धभागपरिमितं जलम् अस्ति तादृशं पात्रं पूर्णं कर्तुं न बहु क्लेशः" इति उक्तवान् । तस्य उत्तरं श्रुत्वा सूर्यभूपतिः तु बहु सन्तुष्टः ।

अनन्तरं ललितः तं वृक्षं पश्यन् - "शिशिरऋतौ पर्णैः रहितः चेत् अपि एषः वृक्षः हेमन्तऋतोः आगमनस्य अनुक्षणं हरितपर्णैः शोभमानः सन् परितः विद्यमानान् जीविनः आकर्षति" इति उक्तवान् ।

तदा चन्द्रवर्मा - "अन्तिमप्रश्नस्य उत्तरं न केवलम् आवयोः पुरतः, अपि तु भवतः मित्राणां पुरतः एव वदतु" इति उक्तवान् ।

तदा ललितः सर्वेषां पुरतः विनयेन - "वैद्यशास्त्रे कठिनतमं शास्त्रं मनस्तत्त्वशास्त्रम् । यदा रोगः आगच्छति तदा मानवः किञ्चित् बलहीनः भवति । तदा वैद्यः धैर्यपूरकैः उत्तमवचनैः तस्य मनोबलस्य वृद्धिं कुर्यात् । यदा वैद्यः मनोबलवर्धकानि वचनानि वदति तदा रुग्णस्य रोगः शीघ्रम् उपशाम्यति । वैद्येन दत्तम् औषधम् अपि परिणामकारि भवति । एतस्य काचकपात्रस्य द्वारा, तस्य वृक्षस्य द्वारा च भवन्तः मनस्तत्त्वशास्त्रस्य अंशमेव पृष्टवन्तः" इति ।

ललितस्य उत्तरं श्रुत्वाः चन्द्रवर्मा मन्दहासपूर्वकम् उक्तवान् - "भवान् नीलकण्ठशास्त्रिणः शिष्यः खलु ? अतः एकम् अंशं स्मारयितुम् इच्छामि । वैद्यः रुग्णैः सह न केवलं मृदुवचनैः, अपि तु सहनया संयमेन चापि व्यवहरेत्" इति ।

'प्रातः भवान् चतस्रः घण्टाः यावत् निरीक्षां कर्तुम् अशक्तः आसीत् इति विषयं चन्द्रवर्मा भङ्ग्यन्तरेण वदन् अस्ति' इति ज्ञातवान् ललितः । अतः सः - "तान् गुणान् अहम् अवश्यम् आत्मसात्करिष्यामि" इति उक्तवान् ।

चन्द्रवर्मणः निर्णयं ज्ञातवान् भूस्वामी तृप्त्या मित्रस्य मुखं वैद्यस्य मुखं च दृष्टवान् ।





# महाभारतम्

हिडिम्बा भीमे अनुरक्ता सती विवाहेच्छां यदा प्रकटीकृतवती तदा भीमः उक्तवान् - "अये, कथम् आवयोः विवाहः शक्यः ? भवतीं परिणेतुं किम् अहं मम सहोदरादीन् एतान् बलिरूपेण समर्पयेयम् ?" इति ।

"मम अग्रजात् भवतः मातुः सहोदराणां च भीतिः यथा न भवेत् तथा अहं करिष्यामि । भवान् एतान् उत्थापयतु" इति उक्तवती हिडिम्बा ।

"सुखनिद्रां कुर्वतः एतान् अहम् उत्थापयितुं न इच्छामि । अन्यत्र एते किमर्थम् उत्थापनीयाः ? भवत्याः अग्रजः अत्र आगतः चेत् अपायः इति उद्देशेन खलु ? सः आगच्छतु नाम । ततः भीतिः नास्ति मम । वीराधिवीरम् अपि जेतुं संहर्तुं च सामर्थ्यम् अस्ति मम" इति उक्तवान् भीमः ।

दीर्घकालः अतीतः चेदपि हिडिम्बा न प्रत्यागता इत्यतः क्रुद्धः हिडिम्बः वृक्षात् अवतीर्य तत् स्थलम् आगतवान्, यत्र च पाण्डवाः सुप्ताः आसन् ।

क्रोधावेशेन आगच्छन्तम् अग्रजं दूरात् एव दृष्ट्वा हिडिम्बा भीमम् उद्दिश्य - "मम अग्रजः क्रोधेन आगच्छन् अस्ति । एतत्सन्दर्भे भवताम् अत्र स्थितिः न क्षेमाय । अतः भवतः सर्वान् आकाशमार्गेण नीत्वा सुरक्षितं स्थलं प्रापयिष्यामि" इति उक्तवती ।

"अये, अलं भीत्या । भवत्याः अग्रजस्य मरणं सन्निहितम् । अतः एव सः अत्र आगच्छन् अस्ति । समग्रं राक्षसकुलम् एव अत्र आगतं चेदपि नास्ति भीतिः मम । एवं स्थिते

११. हिडिम्बासुरवधः



सम्बन्धं प्राप्तुम् इच्छति भवती ? किं राक्षसकुलस्य मानः धूलिसात्क्रियते भवत्या ? एतत् अहं सर्वथा न सहे । पश्यतु इदानीम् । एतं वराकं यमसदनं प्रति सम्प्रेष्य भवतीं यथायोग्यं दण्डयिष्यामि'' इति उक्त्वा भीमसमीपं गन्तुम् उद्युक्तः ।

''अये राक्षसाधम ! मां मारयेत् वा भवान् ? ततः पूर्वं भवन्तम् एव मारयित्वा एतत् वनं निष्कण्टकं करिष्यामि अहम्'' इति कोपेन गर्जितवान् भीमः ।

हिडिम्बः करौ प्रसार्य भीमं ग्रहीतुम् आगतवान् । भीमः हिडिम्बस्य प्रसारितौ तौ करौ गृहीत्वा तं किञ्चिद्दूरम् आकृष्य नीतवान् । तावता हिडिम्बः भीमस्य ग्रहणात् आत्मानं मोचयन् उच्चैः आक्रोशनं कृतवान् । एतत् आक्रोशनं श्रुतं चेत् माता सहोदराः च जागरिताः भवेयुः इति विचिन्त्य भीमः हिडिम्बम् इतोऽपि दूरम् आकृष्य नीतवान् । 'भीमः सामान्यः मनुष्यः न' इति जानन् हिडिम्बः महत् सामर्थ्यं प्रदर्शयन् युद्धम् आरब्धवान् ।

यदा तयोः बाहुयुद्धम् आरब्धं तदा भूमिः अकम्पत । वृक्षेभ्यः पर्णानि अपतन् । कुन्ती धर्मराजादयः च जागरणं प्राप्य झटिति उत्थितवन्तः ।

अनतिदूरे एव शृङ्गारस्य प्रतिरूपम् इव स्थितां सुन्दरीं दृष्ट्वा कुन्ती प्रीतिपूर्णेन स्वरेण - ''वत्से ! भवती वनदेवता इव, अप्सराः इव च दृश्यते । का भवती ? कुतः आगता ? कुत्र प्रस्थिता ? स्वस्य इतिवृत्तं

किं भवत्याः अग्रजस्य आगमनेन ? इदानीं मम बलं दृष्ट्वा सन्तोषम् अनुभवतु भवती'' इति उक्तवान् भीमः ।

''मम अग्रजः एतावता एव बहून् वीरान् मारितवान् अस्ति । अतः आतङ्कः मम'' इति उक्तवती हिडिम्बा ।

तावता हिडिम्बः तयोः समीपम् आगतवान् आसीत् । रमणीयैः वस्त्रैः, विविधैः अलङ्कारैः च विभूषितां भगिनीं दृष्ट्वा एव हिडिम्बः ज्ञातवान् यत् एषा प्रेमरोगग्रस्ता जाता इति भासते इति । अतः सः कोपेन हुङ्कुर्वन् अग्रे आगत्य - ''अये दुष्टे, अहं बुभुक्षया म्रियमाणः अस्मि । भवती तु अत्र हावभावादिभिः कमपि वशीकर्तुम् उद्युक्ता अस्ति ! किम् एतस्य मानवस्य

विस्तरेण वदतु तावत्'' इति उक्तवती।

हिडिम्बा वस्तुस्थितिम् आगोपयन्ती सर्वम् उक्तवती - ''अम्ब ! अहं, मम अग्रजः हिडिम्बः च एतस्मिन् एव अरण्ये वसावः। 'खादनार्थं भवन्तः सर्वे आनेतव्याः' इति उक्त्वा मम अग्रजः माम् अत्र प्रेषितवान् अस्ति। अतः अहम् अत्र आगता। किन्तु भवत्याः पुत्रस्य रूपं दृष्ट्वा आकृष्टा अनुरक्ता च अहं मम अग्रजस्य वचनं पालयितुं न शक्तवती। मम मनसि स्थितं भावम् एतावता भवत्याः पुत्रम् उक्तवती अस्मि। तावता मम अग्रजः अत्र आगतः। भवत्याः पुत्रः मम अग्रजम् आकृष्य दूरं नीतवान् अस्ति। तयोः युद्धं प्रचलत् अस्ति तत्र'' इति।

हिडिम्बामुखात् प्रवृत्तं श्रुत्वा धर्मराजः, अर्जुनः, नकुलः, सहदेवः च युद्धं समीपात् द्रष्टुम् इच्छन्तः युद्धस्थलं गतवन्तः। महता कुतूहलेन युद्धं पश्यन्तः स्थितवन्तः च।

उभौ अपि सिंहसदृशौ एव। दवाग्नितः उत्पन्नः धूमः इव तौ परितः धूलिः प्रसृता आसीत्। युद्धे हिडिम्बस्य पराजयस्य सूचनाम् अदृष्ट्वा अर्जुनः - ''भीमसेन ! यदि भवान् श्रान्तः स्यात् तर्हि युद्धार्थं मह्यं किञ्चित् अवकाशं कल्पयतु'' इति उक्तवान्।

''अर्जुन ! अलं भीत्या ! दीर्घकालतः युद्धसुखम् अननुभवन् अहं युद्धं किञ्चित् दीर्घकालं कर्तुम् इच्छन् एवं व्यवहरन् अस्मि। मम हस्ते पतितः एषः सजीवं स्यातुं तु कदापि न अर्हति'' इति उक्तवान् भीमः।

''तर्हि यावच्छीघ्रम् एतं संहरतु। सूर्यास्तसमयः आसन्नः दृश्यते। यथा यथा





न्धकारः प्रसरति तथा तथा राक्षसानां बलं वर्धते इति श्रूयते। अतः अलं क्रीडया। शीघ्रं मारयतु एतम्। अन्यथा मम बाणैः एतम् अहम् एव संहरिष्यामि'' इति उक्तवान् अर्जुनः।

एतत् वचनं श्रुत्वा भीमः समग्रां शक्तिम् एकत्रीकृत्य राक्षसम् उन्नीय चक्राकारेण भ्रामितवान्। ततः भूमौ घट्टनेन तस्य शिरः भञ्जितवान् च। हिडिम्बः उच्चैः आक्रोशनं कुर्वन् प्राणान् अत्यजत्।

कुन्ती धर्मराजादयः च भीमस्य पराक्रमम् अभिनन्दितवन्तः। अर्जुनः भीमस्य पराक्रमं विशेषतः श्लाघितवान्। ततः सर्वान् उद्दिश्य सः उक्तवान् - ''इतः अनतिदूरे कश्चन ग्रामः अस्तीति भासते। अन्धकारप्रसारात् पूर्वं तत्र गमनं वरं स्यात्'' इति।

ततः सर्वे गन्तुं सिद्धाः जाताः। कुन्ती अग्रे गतवती। सर्वे ताम् अनुसृतवन्तः। हिडिम्बा अपि तान् अनुसृतवती। एतत् दृष्ट्वा भीमः - ''अये मानवघातिनि! मां मोहनरूपेण वशीकृत्य अग्रजमारणस्य प्रतीकारः साधनीयः इति चिन्तयन्ती अस्ति वा भवती? प्रतिगच्छतु भवती इतः। अन्यथा अग्रजेन या गतिः प्राप्ता सा एव गतिः स्यात् भवत्याः अपि'' इति उक्तवान्।

तदा धर्मराजः उक्तवान् - ''अये, भीमसेन! महिलां मारयितुम् उद्युक्तः खलु भवान्! अस्मद्विषये कोपवती अपि एषा किं वा कर्तुं शक्नुयात्? एतस्याः अग्रजः तु मारणयोग्यः आसीत्। अतः तं मारयता भवता उचितम् एव कृतम्। नास्ति तत्र संशयः। किन्तु एतया किम् अपकृतम्? 'हिडिम्बस्य अनुजा' इति एकेन एव कारणेन किम् एषा वधयोग्या भवेत्? न खलु? अतः भवतः चिन्तनम् अयुक्तम्'' इति।

तावति काले हिडिम्बा धर्मराजस्य पादौ गृहीत्वा - ''अहं कथमपि भीमसेने अनुरक्ता जाता। ततः बान्धवान् त्यक्तुं सिद्धा सती राक्षसधर्मं परित्यज्य भवत्समीपम् आगता अस्मि। इदानीं भवन्तः एव शरणं मम। यदि आर्यः भीमः मां तिरस्कुर्यात् तर्हि अहं प्राणत्यागं करिष्यामि। मम प्राणान् रक्षन्तु कृपया। आपत्काले अहं भवतां साहाय्यं करिष्यामि। आकाशमार्गेण लीलया गमनार्थम्, अन्येषां नयनार्थं च सामर्थ्यम्



अस्ति मम। मां मा परित्यजन्तु कृपया'' इति प्रार्थितवती।

तदा धर्मराजः उक्तवान् - ''भद्रे! भवती दुष्टा न इत्यत्र विश्वासः अस्ति मम। अलं चिन्तया। अनुरागेण आगतां भवतीं न तिरस्करोति भीमः। भवन्तौ दिने यत्र कुत्रापि विहारं कर्तुम् अर्हतः। किन्तु रात्रौ तु भवत्या सः अवश्यम् अस्मत्समीपं प्रेषणीयः'' इति।

हिडिम्बा एतं नियमम् अङ्गीकृतवती। भीमः अपि तस्याः परिणयम् अङ्गीकृतवान्। ततः भीमः उक्तवान् यत् पुत्रोत्पत्तिपर्यन्ताम् एतां पत्नीत्वेन परिग्रहीष्यामि इति।

अनन्तरं हिडिम्बा भीमेन सह आकाशमार्गेण ततः निर्गतवती। ततः तौ पर्वतशिखरेषु, गुहासु, नदीतीरेषु, सरोवरेषु, सुन्दरेषु वनेषु, रमणीयेषु लतामण्डपेषु च विहारं कृतवन्तौ। गच्छता कालेन हिडिम्बा गर्भवती जाता। योग्ये काले एकं पुत्रं प्रसूतवती च।

जातमात्रपुत्रः कामरूपी सन् प्रौढाकारं प्राप्य मातापितरौ नमस्कृत्य विनयेन स्थितवान्। तस्य शिरसि एकः अपि केशः न आसीत्। शिरः घटाकारेण दृश्यते स्म। एतत् दृष्ट्वा आश्चर्यचकिता हिडिम्बा 'घटोत्कचः' इति तस्य नाम कृतवती।

(उत्कचः घटः नाम 'केशरहितः घटः' इत्यर्थः।)

आश्चर्यचकितौ मातापितरौ पुनः नमस्कृत्य घटोत्कचः - ''यदि मया किमपि करणीयं स्यात् तर्हि मां स्मरन्तु भवन्तः। अनुक्षणम् एव उपस्थितः भविष्यामि'' इति उक्त्वा उत्तरदिशि गतवान्। हिडिम्बा अपि पूर्वतनं नियमं स्मरन्ती भीमस्य अनुज्ञां प्राप्य स्वोद्दिष्टं देशं प्रति प्रस्थितवती।

अनन्तरं पाण्डवाः जटाधारिणः चीवरधारिणः च सन्तः ब्राह्मणकुमारकवेषेण मत्स्यदेशं, त्रिगर्तदेशं, पाञ्चालदेशं, कीचकदेशं च अतिक्रम्य अग्रे गतवन्तः।

एवं यदा ते देशसञ्चारं कुर्वन्तः आसन् तदा कदाचित् तैःव्यासमहर्षिः दृष्टः। सर्वे तं भक्त्या नमस्कृतवन्तः।

तान् उक्तवान् व्यासमहर्षिः - ''वत्साः! मम दृष्ट्या भवन्तः धृतराष्ट्रपुत्राः च समानाः एव। किन्तु धृतराष्ट्रपुत्रैः भवतां विषये

अन्याय्यम् आचरितम्। तारुण्ये एव भवन्तः एवं कष्टम् अनुभवन्तः सन्ति यत् तत् मम खेदाय भवति । कष्टानि धैर्येण सम्मुखीकृतानि चेदेव सुखमयानि दिनानि प्राप्यन्ते । अलं चिन्तया । इतः अनतिदूरे एकचक्रं नाम नगरम् अस्ति । तत् रमणीयं सुखवासयोग्यं च अस्ति । अज्ञाततया तत्र कानिचन दिनानि स्थातुम् अर्हन्ति भवन्तः'' इति ।

ततः व्यासमहर्षिः तान् स्वयम् एकचक्रनगरं नीत्वा कस्यचित् ब्राह्मणस्य गृहे वासव्यवस्थाम् उपकल्पितवान् । ततः कुन्तीम् उद्दिश्य - ''अम्ब ! भवन्तः मासं यावत् अत्र वासं कुर्वन्तु । तावता अहं पुनः आगत्य द्रक्ष्यामि'' इति उक्त्वा ततः निर्गतवान् ।

कुन्ती धर्मराजादयः च तत्र सुखेन वासं कृतवन्तः । ते तस्य गृहस्य सदस्यानां सुखे दुःखे च भागभागिनः जाताः । प्रतिदिनं ते भिक्षायाचनेन आहारं प्राप्नुवन्ति स्म । भिक्षाटनेन यावत् प्राप्यते तत्र कुन्ती भागद्वयं करोति स्म । एकं भागं भीमाय ददाति स्म सा । अवशिष्टं भागं सर्वे विभज्य खादन्ति स्म । तेनैव भागेन अतिथिसत्कारः अपि प्रचलति स्म ।

अथ कदाचित् धर्मराजः, अर्जुनः, नकुलः, सहदेवः च यदा भिक्षायाचनार्थं गताः आसन् तदा गृहे स्थितौ कुन्तीभीमौ ब्राह्मणगृहात् रोदनशब्दं श्रुतवन्तौ ।

एतत् श्रुत्वा कुन्ती भीमम् उद्दिश्य - ''ब्राह्मणकुटुम्बेन कोऽपि अपायः प्राप्तः इति भाति । यदा वयं निराश्रयाः आस्म तदा ते आश्रयदानेन उपकृतवन्तः । अतः तेषां किं कष्टम् इति सर्वप्रथमं विचारणीयम् अस्माभिः । का समस्या इति अहं ज्ञात्वा आगच्छामि'' इति उक्त्वा ब्राह्मणगृहस्य अन्तः गतवती ।

यदा सा गृहं प्रविष्टवती तदा गृहस्वामी ब्राह्मणः पत्नीपुत्रैः सह एकत्र उपविश्य रोदनं कुर्वन् आसीत् । तेषां दुःखं दृष्ट्वा उद्गतानुकम्पा कुन्ती तेषां पार्श्वे उपविश्य प्रीतिपूर्णदृष्ट्या एव सान्त्वनं कृतवती ।



# वास्तविकं वयः

कस्मिंश्चित् ग्रामे भीमेशः नाम कृषिकः आसीत् । गोपालनकार्यार्थं सः कञ्चित् कर्मकरम् इष्टवान् । अतः सः मध्यवर्तिवृत्तिं कुर्वन्तं सदानन्दं दृष्ट्वा स्वस्य अपेक्षां निवेद्य उक्तवान् - ''आदिनम् आतपं वृष्टिं वा अपरिगणय्य गोभिः सह अरण्ये अटनीयं खलु ? अतः यस्य वयः पञ्चविंशतिवर्षेभ्यः न्यूनम् अस्ति तादृशं कञ्चित् मत्समीपं प्रेषयतु'' इति ।

एतदर्थं भीमेशेन गौरवधनरूपेण दत्तानि दश रूप्यकाणि स्वीकुर्वन् उक्तवान् सदानन्दः - ''अलं चिन्तया । भवतः अपेक्षा यथा अस्ति तथैव योग्यं कञ्चित् प्रेषयिष्यामि । भवान् निश्चिन्तः भवतु'' इति ।

द्वित्रदिनानन्तरं कश्चन भीमेशसमीपम् आगत्य नमस्कृत्य - ''स्वामिन् ! मम नाम वीरभद्रः इति । मध्यवर्ती सदानन्दः मां भवत्समीपं प्रेषितवान् अस्ति'' इति उक्तवान् ।

भीमेशः तम् आपादमस्तकं परीक्षादृष्ट्या दृष्ट्वा - ''मया सः सदानन्दः उक्तः आसीत् यत् अल्पवयस्कः प्रेषणीयः इति । भवान् तु पञ्चविंशतिवर्षीयः इव दृश्यते'' इति ।

तदा वीरभद्रः - ''श्रीमन् । मम वयः पञ्चविंशतिवर्षाणि न । अहं तु सप्तदशवर्षीयः एव । कृशकायः अस्मि इति कारणतः मम वयः अधिकम् इव दृश्यते'' इति उक्तवान् ।

''एवम् एव वक्तव्यम् इति सदानन्दः भवन्तं बोधितवान् अस्ति वा ?'' इति हसन् पृष्टवान् भीमेशः ।

''नैव । कदापि न । मम वयः सप्तदश वर्षाणि एव'' इति उक्तवान् वीरभद्रः ।

भीमेशः क्षणकालं विचिन्त्य - ''अस्तु तर्हि । तत्र दृश्यमाने गोष्ठे कट-कम्बलादीनि सर्वाणि सन्ति । तत्र वसतु भवान् । किन्तु भवता जागरूकतया भवितव्यम् । यतः गोष्ठस्थासु गोणीषु स्थितं लवणं मूषकाः खादेयुः कदाचित्'' इति उक्तवान् ।

तदा वीरभद्रः आश्चर्यं प्रकटयन् - ''कथं तत् ? मूषकाः कदाचित् वा लवणं खादेयुः वा ? मम त्रिंशद्वर्षात्मके जीवने इतःपूर्वं कदापि एतादृशी वार्ता मया न श्रुता एव'' इति उक्तवान् ।

एतस्मात् वीरभद्रस्य वास्तविकं वयः प्रकटितम् अभवत् ।



# मधूकवृक्षः

सर्वे जानन्ति एव यत् भल्लूकाः मधुप्रियाः इति । उत्तरभारते भल्लूकाः मधूकवृक्षस्य पुष्पाणि महता सन्तोषेण खादन्ति । कदाचित् ते तानि पुष्पाणि अधिकं खादित्वा मद्यपाः इव चलन्तः सञ्चरन्ति । उत्तरभारतस्य अरण्येषु मधूकवृक्षाः महता प्रमाणेन उपलभ्यन्ते । यदा तण्डुलादिकं किमपि न प्राप्यते तदा अरण्यप्रदेशीयाः आदिवासिनः मधूकपुष्पाणि खादन्तः उदरं पूरयिष्यन्ति । सायङ्काले ते मधूकवृक्षस्य अधः भूमिं स्वच्छीकुर्वन्ति । रात्रौ विकसितानि पुष्पाणि प्रातः भूमौ पतन्ति । एतानि पीतवर्णीयानि भवन्ति । एतानि पुष्पाणि सङ्गृह्य शोषयित्वा सुरक्षितं स्थापयन्ति अरण्यवासिनः । यदा आवश्यकता भवति तदा तानि खादन्ति । कदाचित् पक्त्वा खाद्यते, क्वचित् यथास्थितम् एव खाद्यते । एवं हि श्रूयते यत् अत्याचाररतानाम् आदिवासिनां दण्डनार्थं केचन मराठाशासकाः तत्प्रदेशस्थान् मधूकवृक्षान् कर्तयन्ति स्म इति ।

मधूकवृक्षः हिन्दीभाषया 'महुआ' इति, गुजरातीभाषया 'महूदा' इति, तमिळुभाषया 'इलपै' इति, मलयाळभाषया 'इलुप' इति, तेलुगुभाषया 'इप्पा' इति, कन्नडभाषया 'हिप्पे' इति, आंग्लभाषया च 'इण्डियन् बट्टर्' इति च निर्दिश्यते । एतस्य वृक्षस्य औन्नत्यं प्रायः २० मीटर्परिमितं भवति । वृक्षस्य अन्ते गुच्छाकारकाणि कोमलानि पर्णानि दृश्यन्ते । पुष्पाणि अपि वृक्षस्य अन्तभागे एव दृश्यन्ते । सारयुक्तानि अण्डाकारकाणि एतस्य फलानि हरिद्वर्णयुक्तानि भवन्ति । यद्यपि मधूककाष्ठं बलयुतं भवति, तथापि एषः वृक्षः न छिद्यते, यतः एतस्य पुष्पाणि फलानि च मूल्यवन्ति भवन्ति । मधूकबीजेभ्यः तैलं प्राप्यते । एतत् तैलं फेनकनिर्माणे औषधनिर्माणे च उपयुज्यते । मधूकवृक्षस्य पुष्पाणि, वृक्षात् निर्गच्छन् रसः, त्वक् इत्यादयः औषधनिर्माणे उपयुज्यन्ते ।



अस्माकं देशस्य ऋषयः - २

# विश्वामित्रः

विश्वामित्रः राज्यं परित्यज्य तपः कुर्वन् अपि वसिष्ठविषयकम् ईर्ष्या-द्वेषादिकं जेतुं न शक्तवान् इति विषयं वयं वसिष्ठविषये पठनसमये ज्ञातवन्तः स्मः।

विश्वामित्रस्य अवगुणः नाम एषः एव। अन्ते सः तम् अवगुणम् अपि जित्वा वसिष्ठमुखात् 'भवान् ब्रह्मर्षिः' इति वाचितवान्।

पूर्वं सत्यव्रतः नाम राजकुमारः आसीत्। सः दुर्व्यसनासक्तः आसीत्। अतः तस्य पिता क्रुद्धः सन् तं राज्यात् बहिष्कृतवान् आसीत्। एवं बहिष्कारं प्राप्तवान् सत्यव्रतः तदेव अरण्यं गतवान्, यत्र च पत्नी-पुत्रादिभिः सह वसन् विश्वामित्रः तपः आचरन् आसीत्।

विश्वामित्रः यदा तस्मिन् अरण्ये न आसीत् तदा घोरः क्षामः तं प्रदेशम् अपीडयत्। तत्समये सत्यव्रतः आहारादिदानेन विश्वामित्रस्य पत्नीपुत्रादीन् रक्षितवान्। कदाचित् क्षामकारणतः कोऽपि आहारः यदा न लब्धः तदा सत्यव्रतः वसिष्ठाश्रमस्य कञ्चन प्राणिनं हत्वा तस्य मांसं किञ्चित् स्वयं खादित्वा अवशिष्टं विश्वामित्रस्य कुटुम्बाय दत्तवान्। एतां वार्तां श्रुत्वा नितरां क्रुद्धः वसिष्ठः - ''भवान् अपि श्वपचः भवतु'' इति सत्यव्रतं शप्तवान्।

विश्वामित्रः यदा कुटीरं प्रत्यागतवान् तदा क्षामवार्तां, क्षामकाले सत्यव्रतेन कृतम् उपकारं च ज्ञातवान्। एतेन सन्तुष्टः सः सत्यव्रतं कृतज्ञतावचनानि उक्तवान्, तद्विषये विशेषाभिमानं प्राप्तवान् च।

किञ्चित्कालानन्तरं सत्यव्रतस्य पिता पुत्रविषये दयां प्रदर्शयन् तं राजधानीम् आनायितवान्। पितुः मरणानन्तरं सत्यव्रतः राजा जातः।

कदाचित् सत्यव्रतस्य मनसि इच्छा उत्पन्ना यत् सशरीरं स्वर्गलोकः गन्तव्यः इति। अतः सः कुलगुरुं वसिष्ठं निवेदितवान् यत् सशरीरं स्वर्गं प्रति गमनार्थं यागादिकं यत् अनुष्ठातव्यं तदर्थं व्यवस्थां करोतु इति। तदा वसिष्ठः उक्तवान् यत् तादृशः यज्ञः कोऽपि नास्ति इति, सशरीरं स्वर्गं प्रति गमनम् अशक्यम् इति च। किन्तु सत्यव्रतः वसिष्ठस्य एतत् वचनं न अङ्गीकृतवान्। तयोः वादविवादः प्रवृत्तः। अन्ते नितरां क्रुद्धः वसिष्ठः सत्यव्रतं 'त्रिशङ्कुः (त्रीणि महापापानि यः कृतवान् सः) भव' इति शप्तवान्।

त्रिशङ्कुः सत्यव्रतः विश्वामित्रसमीपं गत्वा स्वस्य अपेक्षां प्रकटितवान्। 'वसिष्ठस्य अपेक्षया श्रेष्ठः इति ख्यातिं प्राप्तुम् इतोऽपि उत्तमः अवकाशः अन्यः न लभ्येत' इति मत्वा विश्वामित्रः उत्साहेन यज्ञम् एकम् आरब्धवान्। तस्य यज्ञस्य प्रभावतः त्रिशङ्कुः स्वर्गद्वारसमीपं गन्तुं शक्तः जातः। किन्तु तत्र देवाः तस्य गमनं निरुध्य तम् अधः पातितवन्तः। भूमिं प्रति पतन् त्रिशङ्कुः उच्चस्वरेण विश्वामित्रम् आहूतवान्। ''तत्रैव तिष्ठ'' इति उक्तवान् विश्वामित्रः। त्रिशङ्कुः अधोमुखतया आकाशे एव स्थितवान्। ततः विश्वामित्रः त्रिशङ्कोः निमित्तं स्वतपश्शक्त्या अपरं स्वर्गम् एव निर्मितवान्। सः एव 'त्रिशङ्कुस्वर्गः' इति ख्यातः अभवत्। एवं तपश्शक्त्या साधयितुम् असाध्यं किमपि नास्ति इत्येतत् वचनं प्रतिसृष्ट्या दृढीकृतवान् विश्वामित्रः।

विश्वामित्रस्य तपोभङ्गं कर्तुं कदाचित् इन्द्रः मेनकां प्रेषितवान् आसीत् । विश्वामित्रः मनश्चाञ्चल्यं प्राप्य तया सह कानिचित् दिनानि वासं कृतवान् । तयोः एका पुत्री उत्पन्ना । तस्याः नाम शकुन्तला इति । प्राप्तयौवना सा दुष्यन्तं परिणीय भरतं प्रसूतवती । 'भरतेन पालितः एषः देशः 'भारतदेशः' इति ख्यातः अभवत्' इति कथा श्रूयते ।

हरिश्चन्द्रस्य कीर्तिः दशसु दिक्षु ख्याता अभवत् यत् तत्र विश्वामित्रः अपि परम्पराकारणम् आसीत् । 'महति कष्टे आपतिते सत्यपि सत्यपालकः हरिश्चन्द्रः वचनपरिपालनं न परित्यजति' इति इन्द्रस्य सभायां वसिष्ठः यदा उक्तवान् तदा विश्वामित्रः 'हरिश्चन्द्रमुखात् असत्यं वाचयिष्यामि' इति प्रतिज्ञाय ततः प्रस्थितवान् । उपायेन हरिश्चन्द्रस्य राज्यं वशीकृतवान् सः । यावत् दातव्यं तावत् पूर्णरूपेण इतोऽपि न दत्तम् इति वदन् सः धनम् आनेतुं शिष्यं सम्प्रेष्य शिष्यद्वारा हरिश्चन्द्रं बहुधा पीडितवान् ।

चक्रवर्ती हरिश्चन्द्रः वचनपालनार्थं सर्वस्वम् अपि समर्पितवान् । काश्यां पत्नीं पुत्रं च कस्यचित् ब्राह्मणस्य सकाशे न्यासरूपेण निक्षिप्य स्वयं श्मशानरक्षणकार्ये उद्युक्तः अभवत् । सर्पदंशनात् मृतं पुत्रं यदा पत्नी श्मशानम् आनीतवती तदा शवदहनात् पूर्वं शुल्कं दातव्यम् इति कठोरतया उक्तवान् हरिश्चन्द्रः । तस्य सत्यनिष्ठां दृष्ट्वा सन्तुष्टाः देवाः प्रत्यक्षीभूय राज्यं पत्नीं पुत्रं च तस्मै प्रतिदत्तवन्तः ।

एषा हरिश्चन्द्रकथा लोके सुप्रसिद्धा । हरिश्चन्द्रस्य सत्यव्रतत्वं लोकत्रये अपि यथा ज्ञातं भवेत् तथा कुर्वन् तस्य कीर्तिं चिरस्थायिनीं कृतवान् अस्ति विश्वामित्रः ।



# भवन्तः जानन्ति वा ?

१. अस्माकं देशे 'सप्त भगिन्यः' इति निर्दिश्यमानानि राज्यानि कानि ?

२. विद्युज्जनकं कः अन्विष्टवान् ?

३. सुनीलगवास्करः प्रथमश्रेणीकक्रिकेट्स्पर्धातः कदा निवृत्तः जातः ?

४. आफ्रिकाखण्डे स्थितम् अतिविशालं नगरं किम् ?

५. अस्माकं देशस्य कस्मिन् भागे तुळुभाषा व्यवहारपथे अस्ति ?

६. साहसवीरत्वेन ख्याताः 'समुरै' जातीयाः सैनिकाः कस्मिन् देशे सन्ति ?

७. अस्माकं देशे आरब्धा अतिप्राचीना वार्तापत्रिका का ?

८. प्रपञ्चस्तरे प्रसिद्धा अतिमहती घण्टा का ?

९. मौर्यवंशस्य स्थापकः कः ?

१०. 'टुनीषिया' याः प्राचीनं नाम किम् आसीत् ?

११. अहमदाबाद्नगरं कस्याः नद्याः तीरे अस्ति ?

१२. लङ्कानगरस्य प्राप्त्यर्थं श्रीरामेण निर्मितः सेतुः इदानीं केन नाम्ना निर्दिश्यते ?

१३. 'उत्कलदेशः' इति ख्यातस्य प्रदेशस्य अद्यतनं नाम किम् ?

१५. राष्ट्रस्तरीयक्रिकेट्स्पर्धायां भागं गृहीतवान् प्रथमः भारतीयः कः ?

१६. दूरदर्शनं (टेलिविजन्) केन अन्विष्टम् ?

## उत्तराणि

१. अरुणाचलप्रदेशः, अस्साम्, मणिपुरम्, मेघालयः, मिजोराम्, नागाल्याण्ड्, त्रिपुरं च।

२. मैकेल् प्यारडे।

३. १९७७ तमे वर्षे नवम्बर्मासे।

४. कैरो। (ईजिप्ट्देशस्य राजधानी)

५. कर्णाटके दक्षिणकन्नडजनपदे।

६. जपान्देशे।

७. बाम्बेसमाचार्।

८. मास्कोनगरस्था 'दि ग्रेट्बेल्' नामिका घण्टा।

९. चन्द्रगुप्तमौर्यः।

१०. 'कार्टेज्' इति।

११. सबरमतीनदीतीरे।

१२. आडम्स् ब्रिज् इति नाम्ना।

१३. बङ्गालखातः।

१४. ओरिस्सा इति।

१५. के. एस्. रञ्जितसिङ्ह्।

१६. जान् लागी बार्यिर्ड्वर्येण।



# सुप्रीतस्य प्रश्नाः

रत्नगिरिराज्यस्य राजा सत्यानन्दः साहित्यप्रियः आसीत् । तस्य आस्थाने बहवः पण्डिताः कवयः च आसन् । कदाचित् सत्यानन्दः स्वकीये आस्थाने सर्वकलासम्मेलनम् आयोजितवान् आसीत् । तदा प्रवृत्ते वादविवादकार्यक्रमे सत्यानन्दस्य आस्थानस्य पण्डिताः एव जयं प्राप्तवन्तः ।

सत्यानन्दः स्वस्य आस्थानस्य पण्डितानां प्रतिभायाः जयस्य च सङ्केतरूपेण पञ्चलोहात्मिकाम् एकां घण्टां सज्जीकारितवान् । कुशलाः शिल्पिनः विशेषपरिश्रमेण तां घण्टां सज्जीकृतवन्तः आसन् । एषा घण्टा राज्ञा आस्थाने लम्बिता । ततः राज्ञा सडिण्डिमघोषं वार्ता प्रसारिता यत् यः वादे मम आस्थानस्य पण्डितान् जेष्यति तस्मै आस्थानप्रतिष्ठारूपा एषा घण्टा दीयते, पारितोषिकरूपेण लक्षं सुवर्णनाणकानि दत्त्वा सम्माननं क्रियते च इति ।

एतत् श्रुत्वा बहवः पण्डिताः रत्नगिरेः आस्थानं प्रति आगतवन्तः, वादे भागम् ऊढवन्तः च । किन्तु ते सर्वे पराजयं प्राप्य प्रतिनिवृत्ताः ।

कदाचित् शङ्करः नाम बहुभाषावित् महामेधावी पण्डितः रत्नगिरेः आस्थानं प्रति आगतवान् । ततः दिनद्वयं यावत् आस्थाने वादविवादः प्रवृत्तः । तथापि कस्यापि जयः पराजयः वा न निश्चितः । एतेन एतस्मिन् वादकार्यक्रमे श्रोतॄणाम् आसक्तिः विशेषतः प्रवृद्धा ।

चतुर्थे दिने पण्डितः शङ्करः एव जयं प्राप्तवान् । सत्यानन्दस्य आस्थानपण्डिताः सर्वे लज्जया अवनतमुखाः जाताः । यद्यपि एतेन रत्नगिरेः गौरवस्य हानिः जाता, तथापि पूर्वतनस्य उद्घोषणस्य अनुगुणं राजा पण्डितं शङ्करं लक्षसुवर्णनाणकात्मकस्य पारितोषिकस्य दानेन

' 'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा' '

सत्कृत्य प्रतिष्ठास्पदं घण्टां च दत्त्वा गौरवेण प्रेषितवान्।

विजयगर्वेण शिबिकायाम् उपविश्य गच्छन् पण्डितः शङ्करः रत्नगिरिराज्यस्य सीमासमीपम् आगतवान्। तावता सुप्रीतः नाम कश्चन गोपालकः तस्य अभिमुखम् आगत्य तदीयं गमनं स्थगितवान्।

सुप्रीतः यद्यपि वृत्त्या गोपालकः आसीत्, तथापि देशविषये तस्य विशेषप्रीतिः आसीत्। अतः एव आस्थानपण्डितानाम् अवमाननं स्वस्य अवमाननं भावयति स्म सः। 'केनापि प्रकारेण प्रतिष्ठास्पदभूता घण्टा देशस्य सीमाम् अतिक्रम्य यथा न गच्छेत् तथा करणीयम्' इति तस्य इच्छा आसीत्।

अतः सः शङ्करसमीपम् आगत्य - ''श्रीमन्! राजा सत्यानन्दः प्रजाः पुत्रान् इव प्रीत्या पालयति। अतः अस्माकं दृष्ट्या साक्षात् देवः एव सः। अतः तस्य आस्थानस्य गौरवं प्राणेभ्यः अपि श्रेष्ठतरम्। आस्थान-प्रतिष्ठास्पदभूता एषा घण्टा राज्यसीमाम् अतिक्रम्य यथा न गच्छेत् तथा अहं किमपि कर्तुं शक्नुयां वा?'' इति पृष्टवान्।

तदा शङ्करः तं सकृत् आपादमस्तकं दृष्ट्वा उपहासमिश्रितेन स्वरेण उक्तवान् - ''अवश्यं शक्नुयात् भवान्। तदर्थं भवता अहं जेतव्यः, तावदेव'' इति।

एतत् श्रुतवतः सुप्रीतस्य कोपः यद्यपि प्रवृद्धः, तथापि सः तं निगूहन् - ''भवान् महापण्डितः। अहं तु पामरः। तथापि अहं त्रीन् प्रश्नान् पृच्छामि। तेषां योग्यम् उत्तरं दत्तं चेत् जयः भवतः एव। यदि प्रश्नद्वयस्य योग्यम् उत्तरम् उक्त्वा एकस्य प्रश्नस्य उत्तरं



वक्तुं भवान् न शक्नुयात् तर्हि भवता घण्टा अत्रैव परित्यक्तव्या। प्रश्नद्वयस्य उत्तरं वक्तुं न शक्तं चेत् तानि लक्ष रूप्यकाणि अपि भवता अत्रैव परित्यक्तव्यानि। एकस्यापि प्रश्नस्य उत्तरं वक्तुं न शक्तं चेत् भवता शिबिकायां घण्टां संस्थाप्य राजधानीं प्रतिगत्य घण्टा राज्ञे समर्पणीया। यदि भवान् पण्डितः स्यात् तर्हि मम प्रश्नानाम् उत्तरदानम् अङ्गीकरोतु'' इति उक्तवान्।

शङ्करः सुप्रीतम् उपेक्षया पश्यन् – ''प्रश्नान् पृच्छतु तावत्'' इति हस्तसङ्केतेन सूचितवान्।

''प्रथमः प्रश्नः एवम् – तत् वस्तु किं, यत्र अज्ञातं भवति, कथनात् ज्ञातुं शक्यते, चिन्तनात् अपि ज्ञातुं शक्यते ?'' इति उक्तवान् सुप्रीतः।

शङ्करः उच्चैः हसन् – ''मनुष्यस्य नाम'' इति उक्तवान्।

''नैव। मनुष्यस्य नाम कथनात् ज्ञायेत, किन्तु चिन्तनात् ज्ञातुं न शक्यं तत्। योग्यम् उत्तरं तावत् 'कल्पितकथा' इति। योग्येन क्रमेण चिन्तितं चेत् कथा ज्ञातुं शक्या'' इति उक्तवान् सुप्रीतः।

अकस्मात् प्राप्तात् पराजयात् शङ्करः अप्रतिभः जातः। नियमानुसारं सुप्रीतः शङ्करात् घण्टां वशीकृतवान्।

''इदानीं मया द्वितीयः प्रश्नः पृच्छ्यते। कश्चन वृक्षः। तस्य शाखाद्वयम्। शाखायाः उपरि पञ्च जनाः उपविष्टाः सन्ति। तेषां शिरसः च्छेदः कृतः चेत् अपि रक्तपातः न भवति, कोऽपि मृतोऽपि न भवति। कथम् एतत् ?'' इति पृष्टवान् सुप्रीतः।



शङ्करः किञ्चित्कालं विचिन्त्य वेदान्तपराणि कानिचन उत्तराणि उक्तवान्। किन्तु तानि उत्तराणि तिरस्कृतवान् सुप्रीतः। अन्ते अनन्यगतिकः शङ्करः मौनम् आश्रितवान्। शङ्करस्य मौनं पराजयं मन्यमानः सुप्रीतः उत्तरं स्वयम् उक्तवान् - "वृक्षः नाम मनुष्यः। करद्वयम् एव शाखाद्वयम्। अङ्गुल्यः एव पञ्च जनाः। नखाः एव तेषां शिरांसि। नखच्छेदेन रक्तपातः अङ्गुलिनाशः वा न भवति" इति।

एतत् उत्तरं श्रुत्वा शङ्करः नतमस्तकः जातः। सुप्रीतः तृतीयं प्रश्नं पृष्टवान् - "सुविशालं काशीराज्यं काशीनाथ-रत्नभूपालादयः बहवः राजानः पालितवन्तः। इदानीं मम प्रश्नः - सकलकलाभूषणस्य राजतिलकस्य पुरुषोत्तमस्य मरणात् पूर्वं कः काशीराज्यस्य राजा आसीत् इति" इति।

"एषः कीदृशः महाप्रश्नः ? पुरुषोत्तमात् पूर्वं राज्यवर्धनः काशीराज्यस्य राजा आसीत्" इति हासमिश्रितेन स्वरेण उक्तवान् शङ्करः।

"प्रश्नः लघुः इति चिन्तयता भवता उत्तरकथने प्रमादः कृतः। मया पृष्टम् आसीत् पुरुषोत्तमस्य मरणात् पूर्वं कः राजा आसीत् इति, न तु पुरुषोत्तमात् पूर्वम्। पुरुषोत्तमस्य मरणात् पूर्वं पुरुषोत्तमः एव राजा भवितुम् अर्हति, न अन्यः" इति उक्तवान् सुप्रीतः।

प्रतिवचनं किमपि वक्तुम् अशक्नुवन् शङ्करः स्वस्य पूर्णपराजयम् अङ्गीकृत्य घण्टां शिबिकायाम् आरोप्य राजधानीं प्रतिगत्य तां राज्ञे समर्पितवान्।

प्रवृत्तं सर्वं ज्ञात्वा सन्तुष्टः राजा सुप्रीतस्य पूर्ववृत्तान्तं पृष्टवान्। तदा सुप्रीतः विनयेन उक्तवान् - "प्रभो, अहं विदुषां कुले एव जातः। किन्तु मम बाल्ये एव मातापितरौ दिवङ्गतौ इत्यतः अहम् अनन्यगतिकतया गोपालनवृत्तिम् आश्रितवान्" इति।

आस्थानस्य मानं रक्षितवन्तं सुप्रीतं विशेषतः सत्कृत्य राजा सत्यानन्दः तम् आस्थाने एव योग्ये स्थाने नियोजितवान्।





# पापभारः गुरुतरः

एकस्मिन् ग्रामे भद्रः नाम कश्चित् दुराशाग्रस्तः कृषिकः आसीत् । तस्य गृहस्य पार्श्वे मङ्गला नाम काचित् दरिद्रा कुटीरं निर्माय वसति स्म । सा स्वस्य कुटीरं परितः पुष्पाणां सस्यानि वर्धितवती आसीत् । ततः प्राप्तानां पुष्पाणां विक्रयणं कुर्वती सा पौत्रेण सह सन्तोषेण जीवनं यापयति स्म ।

मङ्गलायाः कुटीरं यत्र अस्ति, तत् स्थलं स्वायत्तीकरणीयम् इति भद्रस्य मनसि कदाचित् दुर्बुद्धिः उत्पन्ना । एकस्मिन् दिने सः मङ्गलाम् आहूय उक्तवान् - "मम गृहं विशालीकरणीयम् इति चिन्तयन् अस्मि । तदर्थं भवत्याः स्थलम् मह्यं ददातु । भवत्यै हानिः यथा न भवेत् तथा यत्किञ्चित् धनं दास्यामि" इति ।

किन्तु मङ्गला एतत् वचनं न अङ्गीकृतवती । सा भद्रम् पृष्टवती - "मम मत्पौत्रस्य च वासार्थम् एषः कुटीरः एव शरणम् । एतं विना अन्यत्र स्थलमेव नास्ति मम । एतत् स्थलं त्यक्त्वा आवां कुत्र गच्छेव ?" इति ।

तदा भद्रः क्रोधेन उक्तवान् - "भवत्याः कष्टसुखादीनां श्रवणेन मम किं प्रयोजनम् ? मह्यं तु एतत् स्थलम् आवश्यकमेव । अतः श्वः प्रातः सूर्योदयात् पूर्वं भवत्या कुटीरः रिक्तीकरणीयः" इति ।

"मया कुटीरः किमर्थं रिक्तीकरणीयः ? किम् अहं भवतः ऋणं स्वीकृतवती, येन मया कुटीरः त्यक्तव्यः भवेत् ?" इति क्रोधेन एव प्रतिप्रश्नं कृतवती मङ्गला ।

एतत् श्रुत्वा कुपितः भद्रः कांश्चन कर्मकरान् आनाय्य मङ्गलायाः गृहे स्थितानि वस्तूनि मार्गे क्षिप्तवान् । कुटीरं च समूलम् उन्मूलितवान् । तदा अनन्यगतिका मङ्गला रोदनं कुर्वती ग्रामप्रमुखस्य समीपं गतवती ।

"नागराजः"

भद्रेण कृतम् अन्याय्यं निवेदितवती च । ग्रामप्रमुखः ग्रामज्येष्ठानां सभाम् आयोज्य भद्रम् अपि आनाय्य विवरणं पृष्टवान् ।

"एतस्याः वृद्धायाः पुत्रः यदा जीवन् आसीत् तदा मत्सकाशात् शतं रूप्यकाणि ऋणरूपेण स्वीकृतवान् आसीत् । तत् पत्रं मम समीपे अस्ति । एतावत्पर्यन्तम् एतस्याः पतिः वा एषा वा वृद्धिं न दत्तवन्तौ । कति दिनानि मया तूष्णीं स्थातुं शक्येत ? अतः अहं वृद्धिसहितं मूलधनं प्राप्तुम् इच्छन् एतस्याः कुटीरं स्वाधीनीकृतवान् अस्मि । एषा वस्तुस्थितिः" इति भद्रः धैर्येण एव उक्तवान् । अस्पष्टेन अङ्गुष्ठाङ्कनेन युक्तं प्राचीनम् एकं पत्रं ग्रामज्येष्ठेभ्यः दर्शितवान् च ।

ग्रामज्येष्ठाः एतत् सत्यमिति मत्वा भद्रस्य आनुकूल्यं यथा भवेत् तथा निर्णयं श्रावितवन्तः । असहायिका मङ्गला अन्याय्यं पश्यन्ती अपि किमपि कर्तुम् अशक्नुवती मौनं स्थितवती ।

अनन्तरदिनेषु वृद्धा मङ्गला अन्यत्र कुटीरं निर्माय पूर्वं यथा तथैव पुष्पाणां विक्रयणं कुर्वती जीवनयापनम् आरब्धवती । केषाञ्चित् दिनानाम् अनन्तरं भद्रः मङ्गलायाः कुटीरः यत्र आसीत् तत्र गृहं निर्मातुम् इच्छन् भूमिखननकार्यम् आरब्धवान् । भूमिखननसमये कदाचित् मङ्गला पौत्रेण सह तत्र आगतवती । तस्मिन् समये भद्रः अपि तत्रैव आसीत् । सः तां दृष्ट्वा - "किं भोः, किमर्थम् अत्र आगतवती भवती ?" इति उपेक्षया पृष्टवान् ।

"भवान् तु ज्येष्ठः धनिकः । अहं तावत्



दरिद्रा । भवतः करुणाशालित्वं मनसि निधाय एकं साहाय्यं प्राप्तुम् इदानीम् अत्र आगतवती अस्मि'' इति उक्तवती मङ्गला ।

''किं साहाय्यम् अपेक्षितम् ?'' इति गर्वेण पृष्टवान् भद्रः ।

''मम पौत्रः पुरातनं स्थलं दर्शयतु इति कोलाहलं कुर्वन् अस्ति । अतः ...'' इति वचनम् अर्धे स्थगितवती मङ्गला ।

''दर्शितवती किल भवती सर्वमपि ? इतःपरं गच्छतु'' इति उक्तवान् भद्रः ।

''गच्छामि एव । किन्तु मह्यं मम कुटीरस्य किञ्चित् मृत्तिका आवश्यकी । कण्डोल-परिमितां मृत्तिकां ददातु कृपया । तया अहं चुल्लीं निर्माय तेन पाकं कुर्वती तृप्तिम् अनुभवामि'' इति उक्तवती मङ्गला ।

तस्याः तं विचित्रम् आशयं श्रुत्वा भद्रः उच्चैः हसन् - ''तर्हि स्वीकृत्य गच्छतु'' इति उक्तवान् ।

मङ्गला एकस्मिन् कण्डोले पुरातन-कुटीरस्य मृत्तिकां पूरयित्वा - ''स्वामिन्, कृपया एकम् उपकारं करोतु । एतं कण्डोलं मम शिरसः उपरि स्थापयतु'' इति उक्तवती ।

भद्रः कण्डोलम् उन्नेतुम् उद्युक्तः । किन्तु सः तावन्तं भारम् उन्नेतुं न शक्तवान् । पुनः पुनः प्रयत्नः कृतः चेदपि सः साफल्यं न प्राप्तवान् । तस्य शरीरात् स्वेदः निर्गतः । किन्तु सः मृत्तिकायुक्तं कण्डोलं तु उन्नेतुं न शक्तवान् ।

एतत् दृष्ट्वा मङ्गला हसन्ती उक्तवती - ''कण्डोलपरिमितां मृत्तिकां उन्नेतुम् एव न शक्नोति भवान् । एवं स्थिते मत्क्षेत्रपरिमितां भूमिं किं भवान् नेतुं शक्नुयात् ? अन्यच्च अन्याय्येन भूमेः वशीकरणात् प्राप्यमाणं पापम् इतोऽपि गुरुतरम् । तत् कथं वहेत् भवान् ?'' इति ।

एतत् श्रुतवतः भद्रस्य मनसि विवेकः उदितः । भूमिलोभेन यत् अन्याय्यम् आचरितं तदर्थं लज्जाम् अनुभूतवान् सः । अनन्तरं सः समीचीनं गृहम् एकं निर्माय मङ्गलायै दत्तवान्, पूर्वं कृतात् अन्याय्यात् जातात् पापात् मुक्तः अभवत् च ।



Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां अगस्ट् - १९९५ मासे प्रकटयिष्यामः ।



Mahantesh C. Morabad



Mahantesh C. Morabad

• उपरितनं चित्रद्वयं पश्यन्तु । • युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून् - २० तः पूर्वम् एव प्रेषयन्तु । • अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । • स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । • शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । • अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

### 'एप्रिल्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **साधवो विविक्ते देशे जगदीशं ध्यायन्ति ।**

द्वितीयचित्रम् - **भक्ताः देवायतने तमेवाराधयन्ति ।**

प्रेषकः - सनत्कुमार उपाध्यायः, श्री शं.अ.स.तो.सं. महाविद्यालयः, द्वारका, जामनगर - ३६१ ३३५


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) - रू. ६०.००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

**PolioPlus**



# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | BCG | Tuberculosis | Once |
| 6 weeks | Polio | Polio | Three times with intervals of at least one month |
| 6 weeks | DPT | Diphtheria Pertussis (Whooping Cough) Tetanus | Three times with intervals of at least one month |
| 9 months | Measles | Measles | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**

Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

**HEALTHY CHILD—NATION'S HOPE & PRIDE**

Design courtesy : World Health Organisation